सूत्र०--( स्वगतम् ) कथमस्मदन्तेवासी विशारदः प्रबन्धविशेषं जिज्ञासति ? ( पुनरुच्चैःस्वरम् ) श्रीनिर्भयभीमनामानं व्यायोगमधिकृत्य प्रवर्त्तध्वम् ।

( नेपथ्ये भीमः )

वत्स ! अर्जुन ! यावद् वयं पाञ्चाल्याः काननकमनीयतां दर्शयामस्तावत् त्वया गाण्डीवयोगमाधाय महाराजेन सह शीघ्रमागन्तव्यम् ।

सूत्र०--कथमयं भीमभूमिकावाही कुशीलवः शब्दायते ? । तदहमपि कार्यान्तरमनुतिष्ठामि ।

( इति निष्क्रान्तः )

॥ प्रस्तावना ॥

—:०:—

( ततः प्रविशति भीमो द्रौपदी च )

भीमः--( द्रौपदीमवलोक्य सरोषम् )

उन्मीलत्केतकीनां नखदलितदलैः कर्णयोः कुण्डलश्री-
र्गण्डाभोगस्थलस्य द्विरदमदजलैर्मण्डनाडम्बराणि ।
मार्णालैस्तन्तुजालैर्वलयविरचितिः किञ्च चञ्चत्कलाऽऽर्यो
वन्यो वेषस्तवैष ज्वलयति कुरुषु क्रोधवह्निं ममान्तः ॥४॥

( पुनः सखेदम् )

अन्यायैकजुषः शठव्रतपुषो येऽस्माकमत्र द्विष-
स्ते नन्दन्ति मुदं वहन्ति महतीं गच्छन्ति च श्लाघ्यताम् ।
ये तु न्यायपराः परार्जवधरास्ते पश्यतामी वयं
नीचैः कर्मकृतः पराभवभृतस्तत्प्राश्च वर्तामहे ॥ ५ ॥

द्रौपदी--[1]सामिय ! अलाहि विसाएणं, जदो—

वीरमहिलाण तं चेव मंडणं जं पियाण भडिवाओ ।
मंडिज्जंते महिला कणयकडएहिं अवराओ ॥ ६ ॥

भीमः--देवि ! किमपरमुच्यते ?–

अद्राक्षुर्ये नरेन्द्रा द्रुपदतनुभुवः केशपाशावकृष्टिं
चक्रुर्वाऽकारयन् वा मनसि किमपरं येऽन्वमन्यन्त मोहात् ।
सर्वेषामेव तेषां समरमखभुवि क्रोधवह्नौ जुहोति
द्वित्रैर्हुङ्कारमात्रैरभिजनसमिधो मध्यमः पाण्डवेयः ॥ ७ ॥

द्रौपदी--[2]नाध ! दुक्करो कुरुपराभवो मे पडिहासदि ।

भीमः--( साक्षेपम् )

अन्यस्यापि प्रतिभयजुषः शौर्यकण्डूकरालान्
शत्रून् मूलाद् दलयितुमहं जागरूकांशपीठः ।
आकर्षद्भिस्तव तु कबरीं यैर्ममैवापराद्धं
तानुच्छेत्तुं यदि न विषहे हा ! हतो वीरवर्गः ॥८॥

तदलमसंभावनया, तावदेहि कान्तारमणीयकमादर्शयामि ।

( उभौ परिक्रामतः )

भीमः--देवि ! पश्य २–

एते निर्झरझात्कृतैस्तु मिलितप्रस्थोदराः क्ष्माभृतः
किञ्चैते फलपुष्पपल्लवभरैर्व्यस्तातपाः पादपाः ।
चक्रोऽप्येष वधूमुखार्धदलितैर्वृत्तिं विधत्ते बिशैः
कान्तां मन्द्ररुतस्तथैव परितः पारापतो नृत्यति ॥९॥

---

१ स्वामिन् ! अलं विषादेन, यतः—
वीरमहिलानां तदेव मण्डनं यत् प्रियाणां भटिवादः ।
मण्ड्यन्ते महिलाः कनककटकैरपराः ॥ १ ॥

२ नाथ ! दुष्करः कुरुपराभवो मे प्रतिभासते ।

द्रौपदी--णाध[1] ! जधा एदाओ अट्ठिपिसिदसोणिदपिच्छलाओ भूमीओ, तधा जाणे मसाणुद्देसो एसो, ता अन्नत्थ वच्चामो।

भीमः--देवि ! किं मामेवमभिदधासि ?, न नाम समृद्धफलकुसुमपल्लव प्रेतवनशाखिनो भवन्ति, यत्पुनरिमाः पिशितशोणितकीकसपङ्किलाः काननभुवस्तत्र कारणेन भवितव्यम् । तदि देवि ! देवतायतनद्वारचारिणमेनं पुरुषं पृच्छामि ।

( ततः प्रविशति यथानिर्दिष्टः पुरुषः )

भीमः--( उपसृत्य ) भो भोः ! वैदेशिकत्वादनभिज्ञा वयमत्रत्यवृत्तान्तस्य, तत्कथय, कस्त्वं, कस्य देवस्यायतनमिदं, किमर्थं च सर्वतः पिशितशोणितकीकससंकुला देवताङ्गणभुवः ?।

पुरुषः--महानयं कथाप्रबन्धः, कुतोऽपि संजातभयश्चाहमिदानीमावेदयितुमसहिष्णुः ।

भीमः--( साहङ्कारम् ) मा भैषीः, कुतोऽप्यसंजातभयो भूत्वा सर्वमावेदय, अहं ते कृतान्तवक्त्रोदरादपि त्राता।

पुरुषः--यद्येवं तर्हि आवेदयामि; पुरः पश्यति भवान् अभ्रंलिह-शिखरशिरःस्खलन्मार्तण्डमण्डलमचलम् ?।

भीमः--ततः किम् ? ।

पुरुषः--अत्र जगत्त्रयख्यातस्थामा बकनामा राक्षसपतिः प्रतिवसति, अपराणि च भूयांसि रक्षांसि ।

द्रौपदी--( सभयम् ) तदो[2] तदो ।

---

१ नाथ ! यथा एता अस्थिपिशितशोणितपिच्छला भूमयः, तथा जाने श्मशानोद्देश एषः, तदन्यत्र व्रजावः ।

२ ततस्ततः ।

**पुरुषः**--तस्य रक्षःपतेः पौरजनानिर्मापितं प्रतिभुवनमिदम्, अहं च पौरैरेवाधिकृतः साहसिकनामा देवतायतनपरिचारकः ।

**भीमः**--ततः ।

**पुरुषः**--सर्वजनग्रासभीतेन पौरलोकेन तस्य रक्षःपतेः प्रतिवासरमेको जन्तुः परिकल्पितः ।

**भीमः**--अहो ! भयकौतुककारी कथारसः ।

**पुरुषः**--ततो यस्य कस्यापि पर्यायो भवति स विहितमरणकालोचितनेपथ्यः पुरीतः समागत्य वध्यशिलातलमिदमधिशेते ।

**द्रौपदी**--( सभयं सकरुणं च) [1]तदो किं तस्स पुरुसस्स ? ।

**पुरुषः**--अनन्तरामियति समये पर्वतादागत्य विकटदंष्ट्राङ्कुरोत्कृत्तमांसं विरसमारसन्तं पुमांसं रौद्ररसावेशपाटलाक्षो राक्षसपतिर्भक्षयति ।

**भीमः**--( कर्णौ पिधाय ) अहह ! अशरणोऽयं जीवलोकः । अहो ! अश्रोतव्यमश्रोतव्यम् ।

**पुरुषः**--समयश्चेदानीमुपहारपुरुषस्य राक्षससमागमनस्य च; तदपसरत यूयमस्मादपायस्थानात् ।

( इत्यभिधाय दिशो विलोकयन् नीचैर्भूत्वा निष्क्रान्तः )

**द्रौपदी**--[2]णाध ! अज्जवि उवहारपुरिसो रक्खसो वा न समागच्छदि, दाव पलायदम्ह ।

( नेपथ्ये )

[3]हा ! पुत्त ! हा ! सिरीससोमाल ! हा ! कुलपईव ! कहिं दाणीं ते पुणो वयणं पिक्खिस्सं ? ।

---

१ ततः किं तस्य पुरुषस्य ? ।

२ नाथ ! अद्यापि उपहारपुरुषो राक्षसो वा न समागच्छति, तावत् पलायावहे ।

३ हा ! पुत्र ! हा ! शिरीषसुकुमार ! हा ! कुलप्रदीप ! कुत्रेदानीं ते पुनर्वदनं प्रेक्षिष्ये ? ।

द्रौपदी--नाथ[1] ! किमिदं ? ।

भीमः--देवि ! सहस्व यावन्निपुणमाकर्णयामि ।

( नेपथ्ये )

हा[2] ! पियय ! महासुहय ! हा ! वियक्खण ! तए विणा मन्दभाइणी कहमहं भविस्सं ? ।

भीमः--देवि ! यथाऽयं करुणध्वनिः श्रूयते तथा व्यक्तं पुरीतः समायात्युपहारपुरुषः, तदेहि तिरोधाय विलोकयावः * ।

(ततः प्रविशति रक्तचन्दनानुलिप्तसर्वाङ्गः परिहितधौताधोवसनः कण्ठपीठप्रलम्बितरक्तकरवीरमालः प्रलम्बमानकेशो मन्दप्रचारी दीनवदनो नवयौवनः पुरुषः, वृद्धा, सर्वाङ्गीणाभरणा वधूश्च )

(पुरुषो मन्दं मन्दं रुदन् शिलातलमधिशेते, शिरोभागपादभागयोर्वृद्धा वधूश्चोपविशतः )

पुरुषः--( सबाष्पकण्ठम् ) अम्ब !

वृद्धा--पुत्तय[3] ! एसा मंदभाइणी चिट्ठामि, संदिस करणिज्जं ।

पुरुषः--प्रिये मालति !

मालती--नाथ[4] ! एसा चिट्ठामि, आदिस, किं करेमि ? ।

पुरुषः--( क्षणं मौनमास्थाय ) अम्ब ! प्रिये मालति ! एषोऽहमिदानीमशरणो विपद्ये, न मे त्रातारः सन्ति, न मे बान्धवा विद्यन्ते, किमुताहमेकाकी गगनगर्भादिव पतितः ? ।

---

१ नाथ ! किमिदम् ? ।

२ हा ! प्रियक ! महासुभग ! हा ! विचक्षण ! त्वया विना मन्दभागिनी कथमहं भविष्यामि ?

३ पुत्रक ! एषा मन्दभागिनी तिष्ठामि, सन्दिश करणीयम् ।

४ नाथ ! एषा तिष्ठामि, आदिश, किं करोमि ? ।

* समायात्युपहारः तदेहि तिरोधाय विलोकयिष्याव इति पाठान्तरम् ।

भीमः--( सरोषम् ) देवि ! किमिदमेवमुपहारपुरुषः प्रलपति ?, नन्वहमेतस्यास्मि त्राता ।

द्रौपदी--णाध ! किं एदिणा दिव्वहदगेण पओयणं ? । [1]

भीमः--( साक्षेपम् ) किमेवमपाण्डुकुलोचितमभिदधासि ? ।

त्रस्तांस्त्रातुं सुदति ! न सहो यद्यहं गाढबन्धः
स्कन्धस्थामग्रहिलललितौ धिक् तदेतौ भुजौ मे ।
रक्षोवक्षः सपदि गदया चेन्न संचूर्णयामि
व्यक्तं विश्वत्रितयविजयी नास्ति भीमस्तदानीम् ॥९॥

पुरुषः--अम्ब ! प्रिये मालति ! समयश्चेदानीं राक्षसागमनस्य, तदुत्थाय पुरीं व्रज ।

वृद्धा--( मुखमाघ्राय ) पुत्तय ! एगागिणं तुमं कयंतवयणं पिक्खिविय कहं जामि ?, मंपि रक्खसो भक्खदु । [2]

वधूः-( पुरुषस्य पादौ शिरसि निधाय सकरुणस्वरमुच्चैः ) अज्जउत्त ! अत्थमिदो ममेदाणीं जीवलोगो, समत्थिदो मे विलासो, अवसं संहरिदो सिंगारो, ता अहं हुआसणे पाविसिय तुह मग्गमणुसरिस्सं । [3]

द्रौपदी--णाध ! एहि अन्नदो वच्चामो, न सक्केमि करुणं पेक्खिदुं । [4]

भीमः--देवि ! पर्याप्तमिदानीमन्यत्र गमनेन, रक्षामि साम्प्रतमवश्यमुपहारपुरुषं निर्दलितदोःस्थामाभिमानाद् जातुधानात् ।

---

१ नाथ ! किं एतेन दैवहतकेन प्रयोजनम् ? ।

२ पुत्रक ! एकाकिनं त्वां कृतान्तवदने प्रक्षिप्य कथं यामि ?, मामपि राक्षसो भक्षयतु ।

३ आर्यपुत्र ! अस्तमितो ममेदानीं जीवलोकः, समर्थितो मे विलासः, अवशं संहृतः शृङ्गारः, तस्मादहं हुताशने प्रविश्य तव मार्गमनुसरिष्यामि ।

४ नाथ ! एहि अन्यतो व्रजावः, न शक्नोमि करुणं प्रेक्षितुम् ।

द्रौपदी--णाध ! अपरिचिदो एस पुरिसो, पसिद्धभुयबलो रक्खसो, ता किं अकारणे अप्पा संसयतुलाए आरोवियदि ? [1] ।

भीमः--( साक्षेपम् )

त्रासं मुञ्च द्रुपदतनये ! नन्वसि ब्रूहि का स्यात्
क्रव्यादेऽस्मिन् सुभटगणना स्फूर्जदूर्जोजुषो मे ? ।
दोष्णः क्रीडां किमु मम रणे सोऽपि जिष्णुः सहिष्णु-
र्विश्वस्थाम्नां कवलनपटुः पाण्डवः क्षत्रियोऽस्मि ॥ १० ॥

पुरुषः--अम्ब ! प्रिये मालति ! इदानीं किं स्मरामि, कस्य शरणं गच्छामि ? ।

भीमः--( साक्षेपम्; सहसोपसृत्य साक्षेपमुच्चैःस्वरम् ) अरे ! वराक ! मां स्मर, मम शरणं गच्छ; यस्त्वामात्मसात्करिष्यति ।

(उभे भीषणाकारधारिणं भीममवलोक्य लोचने मीलयतः)

पुरुषः--कथं प्राप्त एव राक्षसः ?। आः ! हा अम्ब ! हा प्रिये मालति ! एष राक्षसवदनं गतोऽस्मि ।

( इत्यभिधाय मूर्च्छितः )

द्रौपदी--( उपसृत्य, उच्चैःस्वरम् ) अये ! मा भयाहि, मा भयाहि, न एस रक्खसो, किं तु पंडुकुलगयणहरिणंको महारायजुहिट्ठिलभाया महावीरचूडामणी तुह्माणं रक्खणत्थमागदो [2] ।

( उभौ विलोक्य ससंभ्रमं प्रणमतः )

भीमः--मा भैषीः, अहं युष्माकं सर्वथा त्राता ।

वृद्धा--( प्रणम्य सकरुणस्वरम् )

---

१ नाथ ! अपरिचित एष पुरुषः, प्रसिद्धभुजबलो राक्षसः, तत् किं अकारणं आत्मा संशयतुलायां आरोप्यते ? ।

२ अये ! मा भैषीः मा भैषीः, न एष राक्षसः, किन्तु पाण्डुकुलगगनहरिणाङ्को महाराजयुधिष्ठिरभ्राता महावीरचूडामणिर्युष्माकं रक्षणार्थमागतः ।

तुज्झ पसाएण चिरं परमेसर ! एस जिअउ मह पुत्तो।
नवजुव्वणमुद्धमुही नंदउ एसावि हु वराई ॥ ११ ॥

वधूः--( सप्रणामाञ्जलिं कृत्वा )

सामिय ! कुणसु पसायं मह दइयं रक्खसाउ रक्खेहि।
भत्ताररक्खणत्थं एस कओ अंजली पुरओ ॥ १२ ॥

द्रौपदी--( सकरुणम् ) नाध ! रक्खेहि एदाए वहुयाए भत्तारं।

तावच्चिय सिंगारो ताव य भोयं च ताव नेवत्थं।
जावच्चिय कुलवहुयाए पिअयमो जीविअं धरइ ॥ १३ ।

भीमः--( उच्चैःस्वरम् ) उत्तिष्ठ भोः ! मा भैषीः।

( पुरुषः प्रतिभयेन न विलोकते )

वृद्धा--पुत्तय ! उत्थेहि एस तुह पाणरक्खणट्टं कुदोवि कोवि परमेसरं समागदो।

वधूः--अज्जउत्त ! उत्थेहि न एस रक्खसेसरो किंतु तुह जीविदेसरो

पुरुषः--(उत्थाय प्रणमति पुनः सखेदमञ्जलिं कृत्वा)

तातस्त्वं मम, रक्षको मम, मम त्वं नायकः पालकः
पाल्योऽहं तव, किङ्करस्तव, तव प्रेष्यो भुजिष्यश्च ते।

---

१ तव प्रसादेन चिरं परमेश्वर ! एष जीवतु मम पुत्रः।
नवयौवनमुग्धमुखी नन्दतु एषाऽपि खलु वराकी ॥ १ ॥

२ स्वामिन् ! कुरु प्रसादं मम दयितं राक्षसात् रक्ष।
भर्तृरक्षणार्थमेष कृतोऽञ्जालिः पुरतः ॥ १ ॥

३ नाथ ! रक्ष एतस्या वध्वा भर्तारम् ;
तावदेव शृङ्गारस्तावच्च भोगश्च तावद् नेपथ्यम्।
यावदेव कुलवध्वाः प्रियतमो जीवितं धरति ॥ १ ॥

४ पुत्रक ! उत्तिष्ठ एष तव प्राणरक्षणार्थं कुतोऽपि कोऽपि परमेश्वरः समागतः।

५ आर्यपुत्र ! उत्तिष्ठ न एष राक्षसेश्वरः, किन्तु तव जीवितेश्वरः।

( उभौ भूमिं सिञ्चमानौ परिभ्रमतः )

( द्रौपदी सभयं तरुमूले निलीयते )

ाघ्रः--( विलोक्य ) कधं[1] इत्थिका ? । अले ! अले ! सूकलमुहा ! एदो एदो एहि, एसा इत्थिका चिट्ठदि ।

क्रः--( ससंभ्रममागत्य ) जिदं[2] मए जिदं मए ( इति नृत्यति )

( द्रौपदी प्रतिभयेन वेपते )

ाघ्रः--इत्थिगे[3] ! अग्गदो भोहि ।

ापदीः--किमिति[4] ? ।

ाघ्रः--णं[5] हगे खाइस्सं ।

( द्रौपदी सभयमुत्थाय परिक्रामति )

क्रः--भट्टा[6] ! एसा इत्थिका लद्धा ता पढमं एदं भक्खेदु सामी ।

कः--अमुनैवाद्य वयं तृप्तिं यास्यामः; तदियमास्ताम् ।

क्रः--( द्रौपदीमाघ्राय जिह्वाग्रेणालिह्य च ) भट्टा[7] ! अदिपेशलाइं एदाए मंससोणिदाइं ता अंतला २ एसावि भक्खियदु ।

कः--यद्यपि वयं राक्षसास्तथापि मर्यादां न लङ्घयामः, एक एव पौरैरस्माकं प्रतिवासरमुपहारपुरुषः कल्पितोऽस्ति ।

---

१ कथं स्त्रिका ? अरे ! अरे ! सूकरमुख ! इत इत एहि, एषा स्त्रिका तिष्ठति ।

२ जितं मया जितं मया ।

३ स्त्रिके ! अग्रतो भव ।

४ किमिति ? ।

५ ननु अहं खादिष्यामि ।

६ भर्तः ! एषा स्त्रिका लब्धा तस्मात् प्रथमं एनां भक्षयतु स्वामी ।

७ भर्तः ! अतिपेशलानि एतस्याः मांसशोणितानि तस्मादन्तरा २ एषाऽपि भक्ष्यताम् ।

राक्षसौ--[१]यद्येवं ता अम्हे भक्खिस्सं ।

बकः--युवामपि एतमेव मेदुरमुपहारपुरुषमश्नीयातम् ।

( राक्षसौ भीमं दन्ताग्रेण त्रोटयतः; द्रौपदी मन्दं मन्दं रोदिति )

बकः--यथाऽयं सविधस्थापितगदस्तथा जाने कोऽपि गोपालः । ( पुनः साक्षेपम् ) बाले ! कोऽयम् ? ।

द्रौपदी--( सभयकम्पम् ) [२]जधा तुम्हे भणाध तधा सव्वकज्जेव एस गोवालो ( पुनर्मन्दस्वरम् ) तुज्झ कालो ।

राक्षसौ--(सविलक्षमुपसृत्य) [३]भट्टा ! एदंमि कक्कसलीले न अम्ह दसणेहि पहालो भोदि ।

बकः--( विहस्य स्वयं दन्ताग्रैर्मांसं त्रोटयति ) ( पुनः सविलक्षमुत्थाय) वज्रकायः कोऽप्ययं न शक्यते शस्त्रैर्विना व्यापादयितुं तदुत्पाट्य पर्वतं नयतम् ।

राक्षसौ--(भीममुत्पाट्य मुञ्चतः) [४]भट्टा ! न अम्हे उप्पाडेदुं सक्केमो ।

बकः--तर्हि अपराण्याकारयतम् ।

सूकरः--( उच्चैःस्वरम् ) [५]अले ! अले ! लक्खसा तुलिदं तुलिदं एध ।

( ततः प्रविशन्ति पञ्चषा राक्षसाः )

[६]भट्टा ! एदे चिट्ठम्ह ।

बकः--उत्पाट्य नयत पर्वतं पुरुषमेनम् ।

---

१ यद्येवं तर्हि आवां भक्षयिष्यावः ।

२ यथा यूयं भणथ तथा सर्वकार्येव एष गोपालः, तव कालः ।

३ भर्त्तः ! अस्मिन् कर्कशरीरे नास्माकं दशनैः प्रहारो भवति ।

४ भर्तः ! न वयं उत्पाटयितुं शक्नुमः ।

५ अरे ! अरे ! राक्षसाः ! त्वरितं त्वरितं एत ।

६ भर्तः ! एते तिष्ठामः ।

**राक्षसाः**--[१]जधा आदिसदि सामी ।

( सर्वे सर्वबलेन भीममुत्पाट्य मन्दं २ निष्क्रान्ताः )

**द्रौपदी**--[२]हा ! अज्जउत्त ! हा ! महावीर ! कहिं गदोसि देहि पडिवयणं ( इति रोदिति )( क्षणं विमृश्य) किमेदिणा अरन्नरुदिदेण, ता एदंमि सहयारे उल्लंबिय वावाएमि अप्पाणम्। (सहकारमुपसृत्य उच्चैःस्वरम्) हा ! महाराय* जुहिट्ठिल ! एसा पंचाली विवज्जेदि । ( लतापाशे कण्ठं बध्नाति )

( ततः प्रविशति अर्जुनेन निर्दिश्यमानमार्गो नकुलसहदेवाभ्यां सह राजा युधिष्ठिरः )

**राजा**--( ससंभ्रमम् ) देवि ! अलमतिसाहसेन, किमर्थमयं अकाण्डे पाण्डवानां त्रपाप्रतिभूरङ्गीकृतो दुरध्यवसायः ? ।

**द्रौपदी**--( सलज्जम् ) [३]अन्नपुरिसवारए भीमो रक्खसेहिं नीदो सो दाणीं वावादीयदि तदो एदं मए अणुट्ठिदम् ।

**राजा**--( विहस्य )

**पाञ्चालीक्रोधशान्त्यै कुरुकुलमखिलं हन्तुमिच्छोर्महद्भ्यां**
**बाहुभ्यामन्यदस्त्रं प्रथयति महतीं यस्य लज्जां गदाऽपि ।**
**त्रैलोक्यस्थामधाम्नः समररसजुषस्तस्य भीमस्य युद्धे**
**योद्धारो यातुधाना वयमिति च कथं पश्य रोमाञ्चिताः स्मः॥१८॥**

**अर्जुनः**--देवि ! मा भैषीः, भीमसेनः खल्वसौ अमुष्माद् जातुधानात्

---

१ यथाऽऽदिशति स्वामी ।

२ हा ! आर्यपुत्र ! हा महावीर ! कुत्र गतोऽसि देहि मे प्रतिवचनम् ? । किमेतेन अरण्यरुदितेन ?, तस्मात् अस्मिन् सहकारे उल्लम्ब्य व्यापादयामि आत्मानम् । हा ! महाराज ! युधिष्ठिर ! एषा पाञ्चाली विपद्यते ।

३ अन्यपुरुषवारके भीमो राक्षसैर्नीतः स इदानीं व्यापाद्यते ततो मयैतदनुष्ठितम् ।

* महावीर इत्यपि ।

कां किल पराभवसंभावनां न वितर्कयत्येव पराम् ।

अपि च—

रजनिचरवराकेष्वस्य भीमस्य युद्धे
विजयमुपदिशन्ती त्वं न किं व्रीडिताऽसि ? ।
गुरुवपुरिति चित्रं वीरमानीति दर्पं
बलितम इति खेदं यो रिपूणां चकार ॥ १९ ॥

द्रौपदी--एँगागी भीमसेणो, पभूदा रक्खसा, तदो भयामि ।

सहदेवः--द्रुपदतनये ! अनुचितमभिदधासि ।

एकोऽहमस्मि रिपवः पुनरस्तसंख्याः
संख्ये स एष सुभटापसदस्य तर्कः ।
कण्डूलबाहुबहुवीरपरिग्रहः किं ?
लोकत्रयं कवलयत्यनिशं कृतान्तः ॥ २० ॥

नकुलः--( साक्षेपम् ) याज्ञसेनि ! अनभिज्ञाऽसि समरसंकथानाम् ।

न स्तोकतां मृगयते न पुनर्बहुत्व-
मन्यैव किन्तु सरणिः समरे जयस्य ।
अल्पेऽपि केचन जयन्ति कथञ्चनापि
कुत्रापि केऽपि बहवोऽपि तिरस्क्रियन्ते ॥ २१ ॥

राजा—रणे शौण्डीराणां रिपुविजयहेतुर्भुजयुगं
गजाश्वं तु द्वेषिप्रतिभयकृते डम्बरविधिः ।
स सारङ्गः कश्चित् करटिकटकूटानि कुरुते
कुरङ्गेन्द्रः शश्वन्मुषितमदलेखान्यधिवनम् ॥ २२ ॥

---

१ एकाकी भीमसेनः, प्रभूता राक्षसास्ततो बिभेमि ।

अर्जुनः--यदि समादिशति देवः तदाऽहमार्यं भीमसेनमनुसरामि ।

राजा--(सरोषम्) भीमोऽप्यपरसाहायिकः पराभूतयेऽपेक्ष्यते ? ।

(नेपथ्ये)

हंहो ! मा भैष्ट भूयः प्रमुदितमनसस्तासु तासु क्रियासु
स्वासु स्वैरं प्रवृत्तिं विरचयत चिरं निर्विशङ्कं तु* लोकाः ।
रक्षोविक्षोभदक्षैरसमनिहतिभिर्मुष्टिभिः सारकीर्णैः
संचूर्ण्यास्थीनि तूर्णं रणभुवि निहितः कालवक्त्रे बकोऽयम् २३

राजा--पाञ्चालि ! सोऽयं निहत्य यातुधानं धैर्यैकनिधिरुपैति भीमसेनः ।

(ततः प्रविशति समररसावेशप्रभूतसर्वाङ्गीणरोमाञ्चकञ्चुकद्विगुणतरमांसलो भीमः)

भीमः--(लतापाशमवलोक्य) अयि ! कातरे ! किमिदम् ? ।

(द्रौपदी अधोमुखी तिष्ठति)

राजा--आस्तां व्रीडावती कथा, कथय कथं निहतो रात्रिंचरः ? ।

भीमः--अहमतः स्थानादुत्पाट्य राक्षसैरेकस्यां शिलायां निहितः ।

राजा--ततस्ततः ।

भीमः--देव ! मां** समानीतमाकर्ण्य मिलितमखिलं राक्षसकुलम् ।

राजा--ततस्ततः ।

भीमः--ततो यावत्करालकृपाणपाणिः स्वयं मां व्यापादयितुमुपक्रमते बकः, तावदहं स्मर रे ! स्मर दैवतमिष्टमिदानीमेष न भवसि इत्यभिधाय योद्धुमुत्थितः ।

---

* निर्विशङ्कास्तु इत्यपि ।

** भीमामिति च ।

( सर्वे सकौतुकम् )

राजा--ततस्ततः[1] ।

भीमः--ततः प्रवृत्तमनेकविधं युद्धमावयोः सुचिरमभूत् ।

द्रौपदी--तदो तदो ।

भीमः--अनन्तरं--

बाहुर्लोकैकराहुः प्रथममपहृतो दक्षिणस्कन्धबन्धा-
दन्धीभूतं व्यथाभिर्मुखमखिलमथो चूर्णितं पार्ष्णिघातैः ।
भूयो भूयः प्रहृत्योरसि रसितमहाकीकसैर्मुष्टिदण्डैः
सद्यः कीनाशदासः समरभुवि मया कल्पितो यातुधानः २४

सर्वे-- ( सप्रमोदमुच्चैःस्वरम् ) साधु महावीर ! साधु ।

अर्जुनः--कः पुनरसौ वराकपुरुषो यदर्थमयमियानायासः ?।

( ततः प्रविशति वध्यनेपथ्यधारी
वृद्धावधूभ्यां सह वराकपुरुषः )

पुरुषः-- ( भीमं प्रणम्य ) एषोऽहमस्मि जीवितदानचेतनाक्रीतो जीवि-
तावधिस्तव दासः ।

वृद्धा वधूश्च-(प्रणम्य) परमेसर[2] ! अम्हिवि दुह किंकरीओ आदिस
किं करणिज्जं ?।

राजा--अये ! कस्त्वम् ? ।

पुरुषः--सविधपुरनिवासी द्विजातिरहमस्मि ।

राजा--प्राणभीरुः कृपापात्रं वराको द्विजातिरासि ?।

पुरुषः--अथ किम् ?। ( पुनर्भीमसेनं प्रति ) परमेश्वर ! समादि-
श किं ते प्रियमादधामि ? ।

---

१ ततस्ततः ।

२ परमेश्वर ! आवामपि द्वे किंकर्यौ आदिश, किं करणीयम् ? ।

भीमः--

दर्पाध्मातदशं निहत्य समरे तं रक्षसामीश्वरं
शौर्याहङ्कृतिमेदुरांसशिखरौ बाहू बलं * लम्भितौ ।
लोकः शोकपरः परां मुदमसौ नीतः कृतान्ताननात्
त्रातस्त्वं मरणाकुलः किमपरं श्रेयस्तरं ब्रूहि नः ?।। २५ ॥

पुरुषः--तथापीदमस्तु--

भूयासुः सत्कवीनां रसरसनपराः काव्यवाचः प्रवाचः
प्रत्याशं यान्तु हेलाविफलितसुजना दुर्जना नाशमाशु ।
धर्मः पुष्णातु वृद्धिं कुरुकुलकमलारामचन्द्रः सुधार्द्रां
प्राप्य स्वातन्त्र्यलक्ष्मीमनुभवतु मुदं शाश्वतीं भीमसेनः।।२६।।

(निष्क्रान्ताः सर्वे)

॥ प्रथमोऽङ्कः ॥

इति प्रबन्धशतकर्तुर्महाकवेः श्रीहेमचन्द्रसूरिशिष्यश्रीरामचन्द्रस्य कृतिरियम् ।

अर्हम्

श्रीयशोविजयजैनग्रन्थमाला [१९]



श्रीरामचन्द्रसूरिविरचितः

# निर्भयभीमव्यायोगः ।



शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरिपादा-
म्भोजचञ्चरीकायमाणाभ्यां
पं-श्रावकहरगोविन्ददास-बेचरदासाभ्यां संशोधितः ।



स च
वाराणस्यां
श्रेष्ठिभूराभाईतनुजहर्षचन्द्रेण निजधर्माभ्युदययन्त्रालये
मुद्रितः प्रकाशितश्च ।



वीरसंवत् २४३७ ।

मूल्यम् ।)

अर्हम्

सिरीविजयधम्मसूरीणं नमो ।

सुअकेवलिसिरीभद्दबाहुसामिविरइआ

# आवस्सयनिज्जुत्ती



आभिणिबोहिअनाणं सुअनाणं चेव ओहिनाणं च ।
तह मणपज्जव*नाणं केवलनाणं च पंचमयं ॥ १ ॥
उग्गह ईहावाओ अ धारणा एव हुंति चत्तारि ।
आभिणिबोहिअनाणस्स भेअवत्थू समासेणं ॥ २ ॥
अत्थाणं उग्गहणम्मि उग्गहो तह विआलणे ईहा ।
ववसायम्मि अवाओ† धरणं पुण धारणं बिंति ॥ ३ ॥
उग्गह इक्कं समयं ईहावाया मुहुत्तमद्धं तु ।
कालमसंखं संखं च धारणा होइ नायव्वा ॥ ४ ॥
पुट्ठं सुणेइ सद्दं रूवं पुण पासइ अपुट्ठं तु ।
गंधं रसं च फासं च बद्धपुट्ठं वियागरे ॥ ५ ॥

---

आभिनिबोधिकज्ञानं श्रुतज्ञानं चैवावधिज्ञानं च ।
तथा मनःपर्यवज्ञानं केवलज्ञानं च पञ्चमकम् ॥ १ ॥
अवग्रह ईहाऽवायश्च धारणा एव भवन्ति चत्वारि ।
आभिनिबोधिकज्ञानस्य भेदवस्तूनि समासेन ॥ २ ॥
अर्थानामवग्रहणेऽवग्रहस्तथा विचारणे ईहा ।
व्यवसायेऽवायो धरणं पुनर्धारणां ब्रुवते ॥ ३ ॥
अवग्रह एकं समयं ईहावायौ मुहूर्तमर्धं तु ।
कालमसङ्ख्यं सङ्ख्यातं च धारणा भवति ज्ञातव्या ॥ ४ ॥
स्पृष्टं शृणोति शब्दं रूपं पुनः पश्यत्यस्पृष्टं तु ।
गन्धं रसं च स्पर्शं च बद्धस्पृष्टं व्यागृणीयात् ॥ ५ ॥

---

* क, पज्जय । † क, ववसायं च अवायं ।

भासासमसेढीओ सद्दं जं सुणइ मीसअं सुणइ ।
वीसेढी* पुण सद्दं सुणेइ नियमा पराघाए ॥ ६ ॥
गिह्णइ य काइएणं निसरइ तह वाइएण जोएण ।
एगंतरं च गिह्णइ निसरइ एगंतरं चेव ॥ ७ ॥
तिविहम्मि सरीरम्मि जीवपएसा हवन्ति जीवस्स ।
जेहि उ गेह्णइ गहणं तो भासइ भासओ भासं ॥ ८ ॥
ओरालिअ वेउव्विअ आहारओ गिह्णइ मुअइ भासं ।
सच्चं सच्चामोसं मोसं च असच्चमोसं च ॥ ९ ॥
कइहि समएहि लोगो भासाइ निरंतरं तु होइ फुडो ।
लोगस्स य कइभागे कइभागो होइ भासाए ॥ १० ॥
चउहि समयेहि लोगो भासाइ निरंतरं तु होइ फुडो ।
लोगस्स य चरमंते चरमंतो होइ भासाए ॥ ११ ॥
ईहाअपोहवीमंसा मग्गणा य गवेसणा ।
सन्ना सई मई पन्ना सव्वं आभिणिबोहिअं ॥ १२ ॥

---

भाषासमश्रेणीतः† शब्दं यं शृणोति मिश्रकं शृणोति ।
विश्रेणिः पुनः शब्दं शृणोति नियमात् पराघाते ॥ ६ ॥
गृह्णाति च कायिकेन निसृजति तथा वाचिकेन योगेन ।
एकान्तरं च गृह्णाति निसृजति एकान्तरं चैव ॥ ७ ॥
त्रिविधे शरीरे जीवप्रदेशा भवन्ति जीवस्य ।
यैस्तु गृह्णाति ग्रहणं ततो भाषते भाषको भाषाम् ॥ ८ ॥
औदरिको वैक्रिय आहारको गृह्णाति मुञ्चति भाषाम् ।
सत्यां सत्यामृषा मृषा च असत्यामृषा च ॥ ९ ॥
कतिभिः समयैर्लोको भाषया निरन्तरं तु भवति स्पृष्टः ।
लोकस्य च कतिभागे कतिभागो भवति भाषायाः ॥ १० ॥
चतुर्भिः समयैर्लोको भाषया निरन्तरं तु भवति स्पृष्टः ।
लोकस्य च चरमान्ते चरमान्तो भवति भाषायाः ॥ ११ ॥
ईहाऽपोहविमर्शौ मार्गणा च गवेषणा ।
संज्ञा स्मृतिर्मतिः प्रज्ञा सर्वमाभिनिबोधिकम् ॥ १२ ॥

---

* क, वीसेढि । † भाषासमश्रेणीः इतो गतः प्राप्त इति यावत्

ऊससिअं नीससिअं निच्छूढं खासिअं च छीअं च ।
निस्सिंघिअमणुसारं अणक्खरं छेलिआईअं ॥ २० ॥
आगमसत्थग्गहणं जं बुद्धिगुणेहि अट्ठहि वि दिट्ठं ।
बिन्ति सुअनाणलंभं तं पुव्वविसारया धीरा ॥ २१ ॥
सुस्सूसइ पडिपुच्छइ सुणेइ गिह्णइ अ ईहए आवि ।
तत्तो अपोहए वा धारेइ करेइ वा सम्मं ॥ २२ ॥
मूअं हुंकारं वा बाढक्कारपडिपुच्छवीमंसा ।
तत्तो पसंगपारायणं च परिणिट्ठ सत्तमए ॥ २३ ॥
सुत्तत्थो खलु पढमो बीओ निज्जुत्तिमीसिओ भणिओ ।
तइओ अ निरवसेसो एस विही होइ अणुओगे ॥ २४ ॥
संखाईआओ खलु ओहीनाणस्स सव्वपयडीओ ।
काओ भवपच्चइआ खओवसमिआउ काओ वि ॥ २५ ॥
कत्तो मे वन्नेउं सत्ती ओहिस्स सव्वपयडीओ ? ।
चउदसविहनिक्खेवं इड्ढीपत्ते अ वुच्छामि ॥ २६ ॥

---

उच्छ्वसितं निःश्वसितं निक्षिप्तं कासितं च क्षुतं च ।
निस्सिङ्घितमनुस्वारमनक्षरं सेण्टितादिकम् ॥ २० ॥
आगमशास्त्रग्रहणं यद् बुद्धिगुणैरष्टभिरपि दिष्टम् ।
ब्रुवन्ति श्रुतज्ञानलाभं तं पूर्वविशारदा धीराः ॥ २१ ॥
शुश्रूषते प्रतिपृच्छति शृणोति गृह्णाति चेहते चापि ।
ततोऽपोहते वा धारयति करोति वा सम्यक् ॥ २२ ॥
मूकं हुङ्कारं वा बाढकारप्रतिप्रश्नमीमांसाः ।
ततः प्रसंगपारायणं* च परिनिष्ठा सप्तमके ॥ २३ ॥
सूत्रार्थः खलु प्रथमो द्वितीयो निर्युक्तिमिश्रितो भणितः ।
तृतीयश्च निरवशेष एष विधिर्भवत्यनुयोगे ॥ २४ ॥
सङ्ख्यातीताः खलु अवधिज्ञानस्य सर्वप्रकृतयः ।
काश्चिद् भवप्रत्ययिताः क्षायोपशमिक्यः काश्चिदपि ॥ २५ ॥
कुतो मे वर्णयितुं शक्तिरवधेः सर्वप्रकृतीः ? ।
चतुर्दशविधिनिक्षेपं ऋद्धिप्राप्तांश्च वक्ष्यामि ॥ २६ ॥

---

* पारे अयनं गमनं प्रापणमिति यावत् ।

ओही खित्तपरिमाणे संठाणे आणुगामिए ।
अवट्ठिए चले तिव्वमंदपडिवाउ*प्पयाइ अ ॥ २७ ॥
नाणदंसणविब्भंगे देसे खित्ते गई इअ ।
इड्ढीपत्ताणुओगे अ एमेआ पडिवत्तीओ ॥ २८ ॥
नामं ठवणा दविए खित्ते काले भवे अ भावे अ ।
एसो खलु ओहिस्सा निक्खेवो होइ सत्तविहो ॥ २९ ॥
जावइया तिसमयाहारगस्स सुहुमस्स पणगजीवस्स ।
ओगाहणा जहन्ना ओहीखित्तं जहन्नं तु ॥ ३० ॥
सव्वबहुअगणिजीवा निरंतरं जत्तिअं भरिज्जसु ।
खित्तं सव्वदिसागं परमोही खित्तनिद्दिट्ठो ॥ ३१ ॥
अङ्गुलमावलिआणं भागमसंखिज्ज दोसु संखिज्जा ।
अङ्गुलमावलिअन्तो आवलिआ अङ्गुलपुहत्तं ॥ ३२ ।
हत्थम्मि मुहुत्तन्तो दिवसन्तो गाउअम्मि बोधव्वो ।
जोअण दिवसपुहत्तं पक्खन्तो पन्नवीसं तु ॥ ३३ ॥

---

अवधिः क्षेत्रपरिमाणं संस्थानमानुगामिकः ।
अवस्थितश्चलस्तीव्रमन्दप्रतिपातोत्पादादि च ॥ २७ ॥
ज्ञानदर्शनविभङ्गाः देशः क्षेत्रं गतिरिति ।
ऋद्धिप्राप्तानुयोगश्च एवमेताः प्रतिपत्तयः ॥ २८ ॥
नाम स्थापना द्रव्यं क्षेत्रं कालो भवश्च भावश्च ।
एष खल्ववधेर्निक्षेपो भवति सप्तविधः ॥ २९ ॥
यावती त्रिसमयाहारकस्य सूक्ष्मस्य पनकजीवस्य ।
अवगाहना जघन्याऽवधिक्षेत्रं जघन्यं तु ॥ ३० ॥
सर्वबह्वग्निजीवान् निरन्तरं यावद् भर ।
क्षेत्रं सर्वदिक्कं परमाऽवधिः क्षेत्रनिर्दिष्टः ॥ ३१ ॥
अङ्गुलावलिकयोर्भागमसंख्येयं द्वयोः संख्येयौ ।
अङ्गुलावलिकान्तरावलिका अङ्गुलपृथक्त्वम् ॥ ३२ ॥
हस्ते मुहूर्तान्तर्दिवसान्तर्गव्यूते बोद्धव्यः ।
योजने दिवसपृथक्त्वं पक्षान्तः पञ्चविंशतिस्तु ॥ ३३ ।

भरहम्मि अद्धमासो जंबूदीवम्मि* साहिओ मासो ।
वासं च मणुअलोए वासपुहत्तं च रुअगम्मि ॥ ३४ ॥
संखिज्जम्मि उ काले दीवसमुद्दा वि हुन्ति संखिज्जा ।
कालम्मि असंखिज्जे दीवसमुद्दा य भइअव्वा ॥ ३५ ॥
काले चउण्ह वुड्ढी कालो भइअव्वु खित्तवुड्ढीए ।
वुड्ढीइ दव्वपज्जव भइअव्वा खित्तकालाओ ॥ ३६ ॥
सुहुमो अ होइ कालो तत्तो सुहुमयरयं हवइ खित्तं ।
अंगुलसेढीमित्ते ओसप्पिणीओ असंखिज्जा ॥ ३७ ॥
तेआभासादव्वाण ‡ अन्तरे इत्थ लहइ पट्ठवओ ।
§ गुरुलहु अ अगुरुलहुअं तंपि तेणेव निट्ठाइ ॥ ३८ ॥
ओरालविउव्वाहारतेअभासा ‖ णपाणमणकम्मे ।
अह दव्ववग्गणाणं कमो विवज्जासओ खित्ते ॥ ३९ ॥
कम्मोवरिं धुवेअरसुन्नेअरवग्गणा अणन्ताओ ।

भरतेऽर्धमासो जम्बूद्वीपे साधिको मासः ।
वर्षं च मनुजलोके वर्षपृथक्त्वं च रुचके ॥ ३४ ॥
संख्येये तु काले द्वीपसमुद्रा अपि भवन्ति संख्येयाः ।
कालेऽसंख्येये द्वीपसमुद्राश्च भक्तव्याः ॥ ३५ ॥
काले चतुर्णां वृद्धिः कालो भक्तव्यः क्षेत्रवृद्धौ ।
वृद्धौ द्रव्यपर्यवयोर्भक्तव्यौ क्षेत्रकालौ तु ॥ ३६ ॥
सूक्ष्मश्च भवति कालस्ततः सूक्ष्मतरकं भवति क्षेत्रम् ।
अङ्गुलश्रेणीमात्रेऽवसर्पिण्योऽसंख्येयाः ॥ ३७ ॥
तैजसभाषाद्रव्याणामन्तरेऽत्र लभते प्रस्थापकः ।
गुरुलघु चाऽगुरुलघुकं तदपि तेनैव नितिष्ठति ॥ ३८ ॥
औदारिकवैक्रियाहारकतैजसभाषाऽऽनाऽपानमनःकर्मणाम् ।
अथ द्रव्यवर्गणानां क्रमो विपर्यासतः क्षेत्रे ॥ ३९ ॥
कर्मोपरि ध्रुवेतरशून्येतरवर्गणा अनन्ताः ।

* क, ख, ग, जंबुद्दीवम्मि । ‡ ख, ग, अन्तरा । § ख, गुरुलहु ग, गुरुलहु अगुरुलहुअं । ‖ ख, ग,–णुपाण– ।

चउधुवणन्तरतणुवग्गणा य मीसो तहाऽचित्तो ॥ ४० ॥
ओरालिअवेउव्विअआहारगतेअ गुरुलहूदव्वा ।
कम्मगमणभासाई एआइं अगुरुलहुआइं ॥ ४१ ॥
संखिज्ज मणोदव्वे भागो लोगपलिअस्स बोधव्वो ।
संखिज्ज कम्मदव्वे लोए थोऊणगं पलिअं ॥ ४२ ॥
तेआकम्मसरीरे तेआदव्वे अ भासदव्वे अ ।
बोधव्वमसंखिज्जा दीवसमुद्दा य कालो अ ॥ ४३ ॥
एगपएसोगाढं परमोही लहइ कम्मगसरीरं ।
लहइ अ अगुरुलहुअं तेअसरीरे भवपुहत्तं ॥ ४४ ॥
परमोहि असंखिज्जा लोगमित्ता समा असंखिज्जा ।
रूवगयं लहइ सव्वं खित्तोवमिअं अगणिजीवा ॥ ४५ ॥
आहारतेअलंभो उक्कोसेणं तिरिक्खजोणीसु ।
गाउअ जहन्नमोही नरएसु उ जोअणुक्कोसो ॥ ४६ ॥
चत्तारि गाउआइं अद्धुट्ठाइं तिगाउअं चेव ।

---

चतुर्ध्रुवानन्तरतनुवर्गणाश्च मिश्रस्तथाऽचित्तो ॥ ४० ॥
औदारिकवैक्रियकाहारकतैजसानि गुरुलघुद्रव्याणि ।
*कर्मकमनोभाषादय एतान्यगुरुलघुकानि ॥ ४१ ॥
सङ्ख्येयो मनोद्रव्ये भागो लोकपलितस्य बोद्धव्यः ।
सङ्ख्येयः कर्मद्रव्ये लोके स्तोकोनकं पलितम् ॥ ४२ ॥
तैजसकर्मशरीरे तैजसद्रव्ये च भाषाद्रव्ये च ।
बोद्धव्यमसङ्ख्येया द्वीपसमुद्राश्च कालश्च ॥ ४३ ॥
एकप्रदेशाऽवगाढं परमावधिर्लभते कर्मकशरीरम् ।
लभते चाऽगुरुलघुकं तैजसशरीरे भवपृथक्त्वम् ॥ ४४ ॥
परमावधिरसङ्ख्येयानि लोकमात्राणि समा‡असङ्ख्येयाः ।
रूपगतं लभते सर्वं क्षेत्रोपमितमग्निजीवाः ॥ ४५ ॥
आहारतेजोलाभ उत्कृष्टतास्तिर्यग्योनिषु ।
गव्यूतं जघन्योऽवधिर्नरकेषु तु योजनमुत्कृष्टतः ॥ ४६ ॥
चत्वारि गव्यूतानि अर्धचतुर्थानि त्रिगव्यूतं चैव ।

---

* कार्मणमित्यर्थः । ‡ उत्सर्पिण्यवसर्पिणीरिति तत्त्वम् ।

अड्ढाइज्जा दुन्नि अ दिवड्ढमेगं च नरएसु ॥ ४७ ॥
सक्कीसाणा पढमं दुच्चं च सणंकुमारमाहिन्दा ।
तच्चं च बंभलंतग सुक्कसहस्सारय चउत्थिं ॥ ४८ ॥
आणयपाणयकप्पे देवा पासन्ति पंचमिं पुढविं ।
तं चेव आरणच्चुअ ओहीनाणेण पासंति ॥ ४९ ॥
छट्ठिं हिट्ठिममज्झिमगेविज्जा सत्तमिं च उवरिल्ला ।
संभिन्नलोगनालिं पासंति अणुत्तरा देवा ॥ ५० ॥
एएसिमसंखिज्जा तिरिअं दीवा य सागरा चेव ।
बहुअयरं उवरिमगा उड्ढं च सकप्पथूभाई ॥ ५१ ॥
संखिज्जजोअणा खलु देवाणं अद्धसागरे ऊणे ।
तेण परमसंखिज्जा जहन्नयं पन्नवीसं तु ॥ ५२ ॥
उक्कोसो मणुएसुं मणुस्सतेरिच्छिएसु अ जहन्नो ।
उक्कोसलोगमित्तो पडिवाइ परमपडिवाई ॥ ५३ ॥
थिबुआगारजहन्नो वट्टो उक्कोसमायओ किंचि ।

---

अर्धतृतीयानि द्वे च द्वितीयार्धमेकं च नरकेषु ॥ ४७ ॥
शक्रेशानाः प्रथमां द्वितीयां च सनत्कुमारमाहेन्द्राः ।
तृतीयां च ब्रह्मलान्तकाः शुक्रसहस्रारजाश्चतुर्थीम् ॥ ४८ ॥
आनतप्राणतकल्पे देवाः पश्यन्ति पञ्चमीं पृथिवीम् ।
तामेवारणाच्युता अवधिज्ञानेन पश्यन्ति ॥ ४९ ॥
षष्ठीमधस्तनमध्यमग्रैवेयकाः सप्तमीं चोपरितनाः ।
संभिन्नलोकनाडीं पश्यन्त्यनुत्तरा देवाः ॥ ५० ॥
एतेषामसंख्येयास्तिर्यग् द्वीपाश्च सागराश्चैव ।
बहुकतरमुपरिमकाः* ऊर्ध्वं च स्वकल्पस्तूपादीन् ॥ ५१ ॥
संख्येययोजनानि खलु देवानामर्धसागरे ऊने ।
ततः परमसंख्येयानि जघन्यकं पञ्चविंशतिस्तु ॥ ५२ ॥
उत्कृष्टो मनुजेषु मनुष्यतिर्यक्षु च जघन्यः ।
उत्कृष्टलोकमात्रः प्रतिपाती परमप्रतिपाती ॥ ५३ ॥
स्तिबुकाकारजघन्यो वृत्त उत्कृष्ट आयतः किञ्चित् ।

र्मिणि पुरुषे पुरुषान्तरचित्तवदेकसन्तानेऽपि स्मृतिप्रत्यभिज्ञाने न स्याताम्; नित्यानित्ये पुंसि पुनः सर्वमेतदवदातमुपपद्यते। विरोधादेः सामान्यविशेषवच्चित्रज्ञानवच्चासंभवात्। तथा तुरङ्गोऽयं शृङ्गसङ्गित्वादित्याद्यप्यत्रोदाहर्त्तव्यम्। ये च सति सपक्षे पक्षविपक्षव्यापक इत्यादयो विरुद्धभेदास्तेऽस्यैव प्रपञ्चभूताः। तथाहि–सति सपक्षे चत्वारो विरुद्धाः। पक्षविपक्षव्यापको यथा–नित्यः शब्दः कार्यत्वात्। सपक्षश्चात्र चतुर्ष्वपि व्योमादिर्नित्यः, स्वकारणसमवायः कार्यत्वं; उभयान्तोपलक्षिता सत्ताऽनित्यत्वमित्येके; तदभिप्रायेण प्रागभावस्यापि नित्यत्वाद्युक्तमेव विरुद्धोदाहरणम्। अन्यथा न विपक्षव्यापि कार्यत्वं स्यात्। यदा त्वादिमत्त्वमेव कार्यत्वं तदा प्रध्वंसस्य नित्यत्वेऽपि कार्यत्वमस्तीत्यनैकान्तिकं स्यात् न विरुद्धमिति। अयं च पक्षे शब्दे विपक्षे घटादौ व्याप्य वर्त्तते। १। विपक्षैकदेशवृत्तिः पक्षव्यापको यथा–नित्यः शब्दः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वात्। अर्हत्यर्थे कृत्याभिधानात् ग्रहणयोग्यतामात्रं ग्राह्यत्वमुक्तम्, तेनास्य पक्ष-
ापकत्वं, विपक्षे तु घटादावस्ति न सुखादौ। २। पक्षविपक्षैकदेश-
त्तिर्यथा–नित्यः शब्दः प्रयत्नानन्तरीयकत्वात्। अयं हि पुरुषादि-
ब्दे पक्षेऽस्ति न वाय्वादिशब्दे, घटादौ च विपक्षे, न विद्युदादौ। ३।
क्षैकदेशवृत्तिर्विपक्षव्यापको यथा–नित्या पृथिवी कृतकत्वात्। कृत-
त्वं द्व्यणुकादावस्ति पृथिव्यां न परमाणौ, विपक्षे तु घटादौ सर्वत्रा-
स्ति। ४। असति सपक्षे चत्वारो विरुद्धाः। पक्षविपक्षव्यापको यथा–
ाकाशविशेषगुणः शब्दः प्रमेयत्वात्। एषु चतुर्ष्वप्याकाशे विशेषगु-
ान्तरस्याभावात् सपक्षाभावः। अयं च पक्षे शब्दे विपक्षे च रूपादौ
्याप्य वर्त्तते। ५। पक्षविपक्षैकदेशवृत्तिर्यथा–तत्रैव पक्षे प्रयत्ना-
नन्तरीयकत्वात्। अयं पक्षे पुरुषादिशब्द एव, विपक्षे च रूपादावेवास्ति, न वाय्वादिशब्दे विद्युदादौ च। ६। पक्षव्यापको विपक्षैकदेशवृत्तिर्यथा–तत्रैव पक्षे बाह्येन्द्रियग्राह्यत्वात्। अयं शब्दे पक्षे व्याप्नोति, विपक्षे तु रूपादावस्ति न सुखादौ। ७। विपक्षव्यापकः

पक्षैकदेशवृत्तिर्यथा—तत्रैव पक्षे अपदात्मकत्वात् । अयं पक्षैकदेशे वर्णात्मकेऽस्ति नान्यत्र, विपक्षे तु रूपादौ सर्वत्रास्ति ।८। ननु चत्वार एव विरुद्धभेदा ये पक्षव्यापका नान्ये, ये पक्षैकदेशवृत्तयस्तेषामसिद्ध-लक्षणोपपन्नत्वात् । तदसत् । उभयलक्षणोपपन्नत्वेनोभयव्यवहार-विषयत्वात्, तुलायां प्रमाणप्रमेयव्यवहारवत् । धर्मिस्वरूपविपरीतसा-धनधर्मिविशेषविपरीतसाधनौ तु सौगतसंमतौ हेत्वाभासावेव न भव-तः; साध्यस्वरूपविपर्ययसाधकस्यैव विरुद्धत्वेनाभिधानाद् । अन्यथा समस्तानुमानोच्छेदापत्तिः । तथाहि—अनित्यः शब्दः कृतकत्वादिति हेतुरनित्यतां साधयन्नपि यो यः कृतकः स शब्दो न भवति, यथा—घटः । यो यः कृतकः स श्रावणो न भवति । यथा—स एवेति धर्मिणः स्वरूपं विशेषं च साधयत्येवेत्यहेतुः स्यात्, नचैवं युक्तमिति ॥५३॥

अनैकान्तिकस्वरूपं प्ररूपयन्ति—

## यस्यान्यथानुपपत्तिः संदिह्यते सोऽनैकान्तिकः ॥५४॥

साध्यसद्भावे क्वचिद्धेतोर्विभावनात् क्वचित्तु तदभावेऽपि विभाव-नादन्यथानुपपत्तिः सन्दिग्धा भवति ॥ ५४ ॥

एतद्भेदसङ्ख्यामाख्यान्ति—

## स द्वेधा-निर्णीतविपक्षवृत्तिकः सन्दिग्धविपक्षवृत्तिकश्च ॥

निर्णीता विपक्षे वृत्तिर्यस्य स तथा; सन्दिग्धा विपक्षे वृत्तिर्यस्य स तथोक्तः । अयं सन्दिग्धविपक्षव्यावृत्तिकः, सन्दिग्धान्यथानुपप-त्तिकः, सन्दिग्धव्यतिरेक इति नामान्तराणि प्राप्नोति ॥ ५५ ॥

तत्राद्यभेदमुदाहरन्ति—

## निर्णीतविपक्षवृत्तिको यथा-नित्यः शब्दः प्रमेयत्वात् ॥५६॥

प्रमेयत्वं हि सपक्षीभूते नित्ये व्योमादौ यथा प्रतीयत तथा विप-क्षभूतेऽप्यनित्ये घटादौ प्रतीयत एव; ततश्चोभयत्रापि प्रतीयमानत्वा-विशेषात् किमिदं नित्यत्वेनाविनाभूतम्, उताहो ! अनित्यत्वेन? इत्येव-

मन्यथानुपपत्तेः संदिह्यमानत्वादनैकान्तिकतां स्वीकुरुते। एवं वह्निमानयं पर्वतनितम्बः पाण्डुद्रव्योपेतत्वादित्याद्यप्युदाहार्यम् ॥ ५६ ॥

अथ द्वितीयभेदमुदाहरन्ति–

**सन्दिग्धविपक्षवृत्तिको यथा-विवादपदापन्नः पुरुषः सर्वज्ञो न भवति वक्तृत्वात् ॥ ५७ ॥**

वक्तृत्वं हि विपक्षे सर्वज्ञे सन्दिग्धवृत्तिकम्; सर्वज्ञः किं वक्ता आहोस्विन्न वक्ता? इति संदेहात्। एवं स श्यामो मैत्रपुत्रत्वादित्याद्यप्युदाहरणीयम्। सोपाधिरयमिति नैयायिकाः। उपाधिः खल्वत्र शाकाद्याहारपरिणामः, साधनाव्यापकत्वे सति साध्येन समव्याप्तिकत्वात्। साधनव्यापकः खलूपाधिर्न भवति। अन्यथा वह्निसंबन्धोऽपि धूमस्य सोपाधिः स्यात्, आर्द्रेन्धनसंबन्धस्य तथाभूतस्य संभवात्। ननु शाकाद्याहारपरिणामोऽपि मैत्रपुत्रत्वाख्यसाधनस्य व्यापक एव; तमन्तरेणाऽस्य हेतोः क्वचिददर्शनात्। परिदृश्यमानकतिपयतत्पुत्रेषु तद्भाव एव तद्भावादिति चेत्। नैवम्। क्वचित्तद्भावभावित्वावलोकनेऽपि सर्वत्र मैत्रपुत्रता शाकाद्याहारपरिणामसमन्वितैवेति निर्णेतुमशक्तेः। तत्संबन्धस्यापि सोपाधिकत्वात्। श्यामत्वरूपस्योपाधेर्विद्यमानत्वात्। मैत्रपुत्रोऽपि हि स एव शाकाद्याहारपरिणतिमान् यः श्याम इति; साधनाव्यापकोऽपि यः साध्यस्याप्यव्यापको नासावुपाधिः। यथा–धूमानुमाने खादिरत्वम्। तद्धि यथा–धूमस्य, एवं वह्नेरप्यव्यापकमेवेति नोपाधिः। अप्रयोजकोऽयं हेत्वाभास इत्यपरे। परप्रयुक्तव्याप्त्युपजीवी हि हेतुरप्रयोजकः; परश्चोपाधिः स चात्रास्तीति। न चैवमपि नामभेदे कश्चिद्दोषः, सन्दिग्धविपक्षवृत्तिकत्वानतिक्रमात्। ये तु पक्षसपक्षविपक्षव्यापकादयोऽनैकान्तिकभेदास्तेऽस्यैव प्रपञ्चभूताः। तथाहि– पक्षसपक्षविपक्षव्यापको यथा–अनित्यः शब्दः प्रमेयत्वात्। अयं पक्षे शब्दे सपक्षे घटादौ विपक्षे व्योमादौ चास्ति। १। पक्षव्यापकः सपक्षविपक्षैकदेशवृत्तिर्यथा–अनित्यः शब्दः प्रत्यक्षत्वात। अस्मदादीन्द्रियग्राह्-

णयोग्यतामात्रं प्रत्यक्षत्वमत्राभिप्रेतं, ततो नास्य पक्षत्रयव्यापकत्वं पक्षैकदेशवृत्तित्वं वा प्रसज्यते । पक्षे हि शब्देऽयं सर्वत्रास्ति, न सपक्षविपक्षयोः, घटादौ सामान्यादौ च भावाद्, व्यणुकादौ व्योमादौ चाभावात् । २ । पक्षसपक्षव्यापको विपक्षैकदेशवृत्तिर्यथा-गौरयं, विषाणित्वात् । अयं हि पक्षं गां सपक्षं च गवान्तरं व्याप्नोति, विपक्षे तु महिष्यादावस्ति, न तु तुरङ्गादौ । ३ । पक्षविपक्षव्यापकः सपक्षैकदेशवृत्तिर्यथा– नायं गौर्विषाणित्वात् । अयं पक्षं गवयं विपक्षं च गां व्याप्नोति, सपक्षे तु महिष्यादावस्ति, न तु तुरङ्गादौ । ४ । पक्षसपक्षविपक्षैकदेशवृत्तिर्यथा–नित्या पृथिवी, प्रत्यक्षत्वात् । अयं पक्षे घटादावस्ति, न परमाण्वादौ, सपक्षे सामान्यादावस्ति, नाकाशादौ, विपक्षे बुद्बुदादावस्ति, नाप्यद्व्यणुकादौ, अयोग्यक्षविषयत्वमेवात्र प्रत्यक्षत्वं द्रष्टव्यम् । ५ । पक्षसपक्षैकदेशवृत्तिर्विपक्षव्यापको यथा–द्रव्याणि दिक्कालमनांसि, अमूर्त्तत्वात् । अयं पक्षे दिक्कालयोर्वर्त्तते, न मनसि, सपक्षे व्योमन्यस्ति, न घटादौ, विपक्षं तु गुणादिकं व्याप्नोति । ६ । पक्षविपक्षैकदेशवृत्तिः सपक्षव्यापको यथा–न द्रव्याणि दिक्कालमनांसि, अमूर्त्तत्वात् । प्राक्तनवैपरीत्येन सुगममेतत् । ७ । सपक्षविपक्षव्यापकः पक्षैकदेशवृत्तिर्यथा–न द्रव्याणि आकाशकालदिगात्ममनांसि, क्षणिकविशेषगुणरहितत्वात् । अयं पक्षे कालदिग्मनःसु वर्त्तते, नाकाशात्मसु, सपक्षं गुणादिकं विपक्षं च पृथिव्यप्तेजोवायुरूपं व्याप्नोति । ८ । यश्च नित्यः शब्दः श्रावणत्वादित्यादि सपक्षविपक्षव्यावृत्तत्वेन संशयजनकत्वादसाधारणानैकान्तिकः सौगतैः समाख्यायते; नैष सूक्ष्मतामञ्चति; श्रावणत्वाद्धि शब्दस्य । सर्वथैव नित्यत्वं यदि साध्यते तदाऽयं विरुद्ध एव हेतुः, कथञ्चिदनित्यत्वसाधनात् । प्राच्याश्रावणत्वस्वभावत्यागेनोत्तरश्रावणत्वस्वभावोत्पत्तेः कथञ्चिदनित्यत्वमन्तरेण शब्देऽनुपपत्तेः । अथ कथञ्चिन्नित्यत्वमस्माच्छब्दे साध्यते तदाऽसौ सम्यग्घेतुरेव, कथञ्चिन्नित्यत्वेन सार्द्धमन्यथाऽनुपपत्तिसद्भावादिति नायमनैकान्तिकः । यं च विरुद्धाव्यभिचारिनामानमनैकान्तिकविशेषमेते व्यतानिषुः, यथा-

अनित्यः शब्दः, कृतकत्वात् घटवत्। नित्यः शब्दः, श्रावणत्वात्, शब्दत्ववदिति; सोऽपि नित्यानित्यस्वरूपानेकान्तसिद्धौ सम्यग्घेतुरेव; तदपरपरिणामित्वादिहेतुवत्। सर्वथैकान्तसिद्धये पुनरुपन्यस्तोऽसौ भवत्येव हेत्वाभासः; स तु विरुद्धो वा संदिग्धविपक्षवृत्तिरनैकान्तिको वेति न कश्चिद्विरुद्धाव्यभिचारी नाम। एवं च असिद्धविरुद्धानैकान्तिकास्त्रय एव हेत्वाभासा इति स्थितम्। नन्वन्योऽप्यकिञ्चित्कराख्यो हेत्वाभासः परैरुक्तः, यथा—प्रतीते प्रत्यक्षादिनिराकृते च साध्ये हेतुरकिञ्चित्करः। प्रतीते, यथा—शब्दः श्रावणः, शब्दत्वात्। प्रत्यक्षादिनिराकृते, यथा—अनुष्णः कृष्णवर्त्मा, द्रव्यत्वाद्; यतिना वनिता सेवनीया, पुरुषत्वादित्यादिः; स कथं नात्राभिहित इति चेत्। उच्यते। नन्वेष हेतुर्निश्चितान्यथानुपपत्त्या सहितः स्याद्रहितो वा। प्रथमपक्षे, हेतोः सम्यक्त्वेऽपि प्रतीतसाध्यधर्मविशेषणप्रत्यक्षनिराकृतसाध्यधर्मविशेषणाऽऽगमनिराकृतसाध्यधर्मविशेषणादिपक्षाभासानां निवारयितुमशक्यत्वात् तैरेव दुष्टमनुमानम्। न च यत्र पक्षदोषस्तत्रावश्यं हेतुदोषोऽपि वाच्यः, दृष्टान्तादिदोषस्याप्यवश्यं वाच्यत्वप्रसक्तेः। द्वितीयपक्षे तु यथोक्तहेत्वाभासानामन्यतमेनैवानुमानस्य दुष्टत्वम्। तथा हि—अन्यथानुपपत्तेरभावोऽनध्यवसायाद्विपर्ययात् संशयाद्वा स्यात्, प्रकारान्तरासंभवात्; तत्र च क्रमेण यथोक्तहेत्वाभासावतार इति नोक्तहेत्वाभासेभ्योऽभ्यधिकः कश्चिदकिञ्चित्करो नाम। एवमेव न कालात्ययापदिष्टोऽपि। तथाहि—अस्य स्वरूपं कालात्ययापदिष्टः कालातीत इति; हेतोः प्रयोगकालः प्रत्यक्षागमानुपहतपक्षपरिग्रहसमयस्तमतीत्य प्रयुज्यमानः प्रत्यक्षागमबाधिते विषये वर्त्तमानः कालात्ययापदिष्टो भवतीति। अयं चाकिञ्चित्करदूषणेनैव दूषितोऽवसेयः। प्रकरणसमोऽप्यप्रकटनीय एव। अस्य हि लक्षणं; यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसम इति; यस्मात्प्रकरणस्य पक्षप्रतिपक्षयोश्चिन्ता विमर्शात्मिका प्रवर्त्तते, कस्माच्चासौ प्रवर्त्तते ?, विशेषानुपलम्भात्; स एव विशेषानुपलम्भो यदा निर्णयार्थमपदिश्यते तदा प्रकरणमनतिवर्त्तमा-

नत्वात् प्रकरणसमो भवति; प्रकरणे पक्षे प्रतिपक्षे च समस्तुल्य इति । यथा–अनित्यः शब्दो नित्यधर्मानुपलब्धेरित्येकेनोक्ते, द्वितीयः प्राह्– यद्यनेन प्रकारेणानित्यत्वं साध्यते तर्हि नित्यतासिद्धिरप्यस्तु, अन्यतरानुपलब्धेस्तत्रापि सद्भावात् । तथाहि– नित्यः शब्दोऽनित्यधर्मानुपलब्धेरिति । अयं चानुपपन्नः, यतो यदि नित्यधर्मानुपलब्धिर्निश्चिता, तदा कथमतो नानित्यत्वसिद्धिः?; अथानिश्चिता, तर्हि संदिग्धासिद्धतैव दोषः । अथ योग्यायोग्यविशेषणमपास्य नित्यधर्माणामनुपलब्धिमात्रं निश्चितमेव, तत्तर्हि व्यभिचार्येव । प्रतिवादिनश्चासौ नित्यधर्मानुपलब्धिः स्वरूपासिद्धैव नित्यधर्मोपलब्धेस्तत्रास्य सिद्धेः । एवमनित्यधर्मानुपलब्धिरपि परीक्षणीया; इति सिद्धं त्रय एव हेत्वाभासाः॥५७॥

अथ दृष्टान्ताभासान् भासयन्ति–

**साधर्म्येण दृष्टान्ताभासो नवप्रकारः ॥ ५८ ॥**

दृष्टान्तो हि प्राग् द्विप्रकारः प्रोक्तः, साधर्म्येण वैधर्म्येण च । ततस्तदाभासोऽपि तथैव वाच्य इति साधर्म्यदृष्टान्ताभासस्तावत्प्रकारतो दर्शितः ॥ ५८ ॥

प्रकारानेव कीर्त्तयन्ति–

**साध्यधर्मविकलः, साधनधर्मविकलः, उभयधर्मविकलः, सन्दिग्धसाध्यधर्मा, सन्दिग्धसाधनधर्मा, सन्दिग्धोभयधर्मा, अनन्वयोऽप्रदर्शितान्वयो विपरीतान्वयश्चेति ॥ ५९ ॥**

इतिशब्दः प्रकारपरिसमाप्तौ; एतावन्त एव साधर्म्यदृष्टान्ताभासप्रकारा इत्यर्थः ॥ ५९ ॥

क्रमेणामून् उदाहरन्ति–

**तत्रापौरुषेयः शब्दोऽमूर्त्तत्वाद् दुःखवदिति साध्यधर्मविकलः ॥ १ ॥ ६० ॥**

पुरुषव्यापाराभावे दुःखानुत्पादेन दुःखस्य पौरुषेयत्वात् तत्रापौरुषेयत्वसाध्यस्यावृत्तेरयं साध्यधर्मविकल इति ॥१॥६०॥

तस्यामेव प्रतिज्ञायां तस्मिन्नेव हेतौ परमाणुवदिति साधनधर्मविकलः ॥ २ ॥ ६१ ॥

परमाणौ हि साध्यधर्मोऽपौरुषेयत्वमस्ति, साधनधर्मस्त्वमूर्त्तत्वं नास्ति, मूर्त्तत्वात् परमाणोः ॥ २ ॥ ६१ ॥

कलशवदित्युभयधर्मविकलः ॥ ३ ॥ ६२ ॥

तस्यामेव प्रतिज्ञायां तस्मिन्नेव च हेतौ कलशदृष्टान्तस्य पौरुषेयत्वान्मूर्त्तत्वाच्च साध्यसाधनोभयधर्मविकलता ॥ ३ ॥ ६२ ॥

रागादिमानयं वक्तृत्वाद्देवदत्तवदिति सन्दिग्धसाध्यधर्मा ॥ ४ ॥ ६३ ॥

देवदत्ते हि रागादयः सदसत्त्वाभ्यां संदिग्धाः; परचेतोविकाराणां परोक्षत्वाद्रागाद्यव्यभिचारिलिङ्गादर्शनाच्च ॥ ४ ॥ ६३ ॥

मरणधर्माऽयं रागादिमत्त्वात् मैत्रवदिति संदिग्धसाधनधर्मा ॥ ५ ॥ ६४ ॥

मैत्रे हि साधनधर्मो रागादिमत्त्वाख्यः संदिग्धः ॥ ५ ॥ ६४ ॥

नायं सर्वदर्शी रागादिमत्त्वात् मुनिविशेषवदिति सन्दिग्धोभयधर्मा ॥ ६ ॥ ६५ ॥

मुनिविशेषे सर्वदर्शित्वरागादिमत्त्वाख्यौ साध्यसाधनधर्मौ संदिग्धेते; तदव्यभिचारिलिङ्गादर्शनात् ॥ ६ ॥ ६५ ॥

रागादिमान् विवक्षितः पुरुषो वक्तृत्वादिष्टपुरुषवदित्यनन्वयः ॥ ७ ॥ ६६ ॥

यद्यपीष्टपुरुषे रागादिमत्त्वं च वक्तृत्वं च साध्यसाधनधर्मौ दृष्टौ, तथापि यो यो वक्ता स स रागादिमानिति व्याप्त्यसिद्धेरनन्वयत्वम्॥७॥६६

**अनित्यः शब्दः कृतकत्वात् घटवदित्यप्रदर्शितान्वयः ॥ ८ ॥ ६७ ॥**

अत्र यद्यपि वास्तवोऽन्वयोऽस्ति तथापि वादिना वचनेन न प्रकाशित इत्यप्रदर्शितान्वयत्वम् । यद्यप्यत्र वस्तुनिष्ठो न कश्चिद्दोषस्तथापि परार्थानुमाने वचनगुणदोषानुसारेण वक्तृगुणदोषौ परीक्षणीयाविति भवत्यस्य वाचनिकं दुष्टत्वम् । एवं विपरीतान्वयाप्रदर्शितव्यतिरेकविपरीतव्यतिरेकेष्वपि द्रष्टव्यम् ॥ ८ ॥ ६७ ॥

**अनित्यः शब्दः कृतकत्वात्, यदनित्यं तत् कृतकं घटवदिति विपरीतान्वयः ॥ ९ ॥ ६८ ॥**

प्रसिद्धानुवादेन ह्यप्रसिद्धं विधेयम्; प्रसिद्धं चात्र कृतकत्वं हेतुत्वेनोपादानाद्, अप्रसिद्धं त्वनित्यत्वं साध्यत्वेन निर्देशाद्; इति प्रसिद्धस्य कृतकत्वस्यैवानुवादसर्वनाम्ना यच्छब्देन निर्देशो युक्तः, न पुनरप्रसिद्धस्यानित्यत्वस्य; अनित्यत्वस्यैव च विधिसर्वनाम्ना यच्छब्देन परामर्श उपपन्नो न तु कृतकत्वस्य ॥ ९ ॥ ६८ ॥

अथ वैधर्म्यदृष्टान्ताभासमाहुः–

**वैधर्म्येणापि दृष्टान्ताभासो नवधा ॥ ६९ ॥**

तानेव प्रकारानुद्दिशन्ति–

**असिद्धसाध्यव्यतिरेकोऽसिद्धसाधनव्यतिरेकोऽसिद्धोभयव्यतिरेकः, सन्दिग्धसाध्यव्यतिरेकः, सन्दिग्धसाधनव्यतिरेकः, सन्दिग्धोभयव्यतिरेकोऽव्यतिरेकोऽप्रदर्शितव्यतिरेको विपरीतव्यतिरेकश्च ॥ ७० ॥**

अथैतान् क्रमेणोदाहरन्ति–

**तेषु भ्रान्तमनुमानं प्रमाणत्वात् यत्पुनर्भ्रान्तं न भवति**

न तत् प्रमाणं यथा स्वप्नज्ञानमिति असिद्धसाध्यव्यतिरेकः; स्वप्नज्ञानात् भ्रान्तत्वस्यानिवृत्तेः ॥ १ ॥ ७१ ॥

निर्विकल्पकं प्रत्यक्षं प्रमाणत्वाद् यत्तु सविकल्पकं न तत्प्रमाणं यथा लैङ्गिकमित्यसिद्धसाधनव्यतिरेको लैङ्गिकात्प्रमाणत्वस्यानिवृत्तेः ॥ २ ॥ ७२ ॥

नित्यानित्यः शब्दः सत्त्वात् यस्तु न नित्यानित्यः स न संस्तद्यथा स्तम्भ इत्यसिद्धोभयव्यतिरेकः स्तम्भान्नित्यानित्यत्वस्य सत्त्वस्य चाव्यावृत्तेः ॥ ३ ॥ ७३ ॥

व्यक्तमेतत्सूत्रत्रयमपि ॥ ३ ॥ ७३ ॥

असर्वज्ञोऽनाप्तो वा कपिलोऽक्षणिकैकान्तवादित्वाद् यः सर्वज्ञ आप्तो वा स क्षणिकैकान्तवादी यथा सुगत इति सन्दिग्धसाध्यव्यतिरेकः सुगतेऽसर्वज्ञतानाप्तत्वयोः साध्यधर्मयोर्व्यावृत्तेः सन्देहात् ॥ ४ ॥ ७४ ॥

अयं च परमार्थतोऽसिद्धसाध्यव्यतिरेक एव क्षणिकैकान्तस्य प्रमाणबाधितत्वेन तदभिधातुरसर्वज्ञतानाप्तत्वप्राप्तेः केवलं तत्प्रतिक्षेपकप्रमाणमाहात्म्यपरामर्शनशून्यानां प्रमातॄणां सन्दिग्धसाध्यव्यतिरेकत्वेनाभास इति तथैव कथितः ॥ ४ ॥ ७४ ॥

अनादेयवचनः कश्चिद्विवक्षितः पुरुषो रागादिमत्त्वाद् यः पुनरादेयवचनः स वीतरागस्तद्यथा शौद्धोदनिरिति सन्दिग्धसाधनव्यतिरेकः शौद्धोदनौ रागादिमत्त्वस्य निवृत्तेः संशयात् ॥ ५ ॥ ७५ ॥

यद्यपि तद्दर्शनानुरागिणां शौद्धोदनेरादेयवचनत्वं प्रसिद्धं तथापि रागादिमत्त्वाभावस्तन्निश्चायकप्रमाणवैकल्यतः सन्दिग्ध एव ॥५॥७५॥

न वीतरागः कपिलः करुणाऽऽस्पदेष्वपि परमकृपयाऽनर्पितनिजपिशितशकलत्वात् यस्तु वीतरागः स करुणास्पदेषु परमकृपया समर्पितनिजपिशितशकलस्तद्यथा-तपनबन्धुरिति सन्दिग्धोभयव्यतिरेक इति तपनबन्धौ वीतरागत्वाभावस्य करुणाऽऽस्पदेष्वपि परमकृपयाऽनर्पितनिजपिशितशकलत्वस्य च व्यावृत्तेः सन्देहात् ॥ ६ ॥ ७६ ॥

तपनबन्धुर्बुद्धो वैधर्म्यदृष्टान्ततया यः समुपन्यस्तः स न ज्ञायते किं रागादिमानुत वीतरागः, तथा करुणाऽऽस्पदेषु परमकृपया निजपिशितशकलानि समर्पितवान्नवा, तन्निश्चायकप्रमाणापरिस्फुरणात् ॥६॥७६॥

न वीतरागः कश्चिद्विवक्षितः पुरुषो वक्तृत्वात् यः पुनर्वीतरागो न स वक्ता यथोपलखण्ड इत्यव्यतिरेकः॥७॥७७॥

यद्यपि किलोपलखण्डादुभयं व्यावृत्तं तथापि व्याप्त्या व्यतिरेकासिद्धेरव्यतिरेकत्वम् ॥ ७ ॥ ७७ ॥

अनित्यः शब्दः कृतकत्वादाकाशवदित्यप्रदर्शितव्यतिरेकः ॥ ८ ॥ ७८ ॥

अत्र यदनित्यं न भवति तत्कृतकमपि न भवतीति विद्यमानोऽपि व्यतिरेको वादिना स्ववचनेन नोद्भावित इत्यप्रदर्शितव्यतिरेकत्वम् ॥ ८ ॥ ७८ ॥

अनित्यः शब्दः कृतकत्वाद् यदकृतकं तन्नित्यं यथाऽऽकाशमिति विपरीतव्यतिरेकः ॥ ९ ॥ ७९ ॥

वैधर्म्यप्रयोगे हि साध्याभावः साधनाभावाक्रान्तो दर्शनीयो न चैवमत्रेति विपरीतव्यतिरेकत्वम् ॥ ९ ॥ ७९ ॥

अथोपनयननिगमनाभासौ प्रभाषन्ते–

**उक्तलक्षणोल्लङ्घनेनोपनयनिगमनयोर्वचने तदाभासौ॥८०॥**

'हेतोः साध्यधर्मिण्युपसंहरणमुपनयः' इत्युपनयस्य लक्षणम्; 'साध्यधर्मस्य पुनर्निगमनम्' इति निगमनस्येति ॥ ८० ॥

उपनयाभासमुदाहरन्ति–

**यथा परिणामी शब्दः कृतकत्वाद् यः कृतकः स परिणामी यथा कुम्भ इत्यत्र परिणामी च शब्द इति कृतकश्च कुम्भ इति च ॥ ८१ ॥**

इह साध्यधर्मं साध्यधर्मिणि साधनधर्मं वा दृष्टान्तधर्मिणि उपसंहरत उपनयाभासः ॥ ८१ ॥

निगमनाभासमुदाहरन्ति–

**तस्मिन्नेव प्रयोगे तस्मात् कृतकः शब्द इति तस्मात्परिणामी कुम्भ इति च ॥ ८२ ॥**

अत्रापि साधनधर्मं साध्यधर्मिणि साध्यधर्मं वा दृष्टान्तधर्मिणि उपसंहरतो निगमनाभासः। एवं पक्षशुद्ध्याद्यवयवपञ्चकस्य भ्रान्त्या वैपरीत्यप्रयोगे तदाभासपञ्चकमपि तर्कणीयम् ॥ ८२ ॥

इत्थमनुमानाभासमभिधायागमाभासमाहुः–

**अनाप्तवचनप्रभवं ज्ञानमागमाभासम् ॥ ८३ ॥**

अभिधेयं वस्तु यथावस्थितं यो जानीते यथाज्ञानं चाभिधत्ते स आप्त उक्तस्तद्विपरीतोऽनाप्तस्तद्वचनसमुत्थं ज्ञानमागमाभासं ज्ञेयम् ॥

अत्रोदाहरन्ति–

**यथा मेकलकन्यकायाः कूले तालहिन्तालयोर्मूले सुलभाः पिण्डखर्जूराः सन्ति त्वरितं गच्छत २ शावकाः! ॥८४॥**

रागाक्रान्तो ह्यनाप्तः पुरुषः क्रीडापरवशः सन्नात्मनो विनोदार्थं

किञ्चन वस्त्वन्तरमलभमानः शावकैरपि समं क्रीडाऽभिलाषेणेदं वाक्यमुच्चारयति ॥ ८४ ॥

एवमुक्तः प्रमाणस्य स्वरूपाभासः; संप्रति संख्याऽऽभासमाख्यान्ति-

**प्रत्यक्षमेवैकं प्रमाणमित्यादिसंख्यानं तस्य संख्याऽऽभासम् ॥८५॥**

प्रत्यक्षपरोक्षभेदाद्धि प्रमाणस्य द्वैविध्यमुक्तम्; तद्वैपरीत्येन प्रत्यक्षमेव, प्रत्यक्षानुमाने एव, प्रत्यक्षानुमानागमा एव प्रमाणमित्यादिकं चार्वाकवैशेषिकसौगतसांख्यादितीर्थान्तरीयाणां संख्यानं, तस्य प्रमाणस्य संख्याऽऽभासम्। प्रमाणसंख्याभ्युपगमश्च परेषामितोऽवसेयः-

चार्वाकोऽध्यक्षमेकं सुगतकणभुजौ सानुमानं सशाब्दं
तद् द्वैतं पारमर्षः सहितमुपमया तत् त्रयं चाक्षपादः ।
अर्थापत्त्या प्रभाकृद्वदति च निखिलं मन्यते भट्ट एतत्
साभावं, द्वे प्रमाणे जिनपतिसमये स्पष्टतोऽस्पष्टतश्च ॥१॥८५॥

अथ विषयाभासं प्रकाशयन्ति-

**सामान्यमेव, विशेष एव, तद्द्वयं वा स्वतन्त्रमित्यादिस्तस्य विषयाभासः ॥ ८६ ॥**

सामान्यमात्रं सत्ताद्वैतवादिनो, विशेषमात्रं सौगतस्य, तदुभयं च स्वतन्त्रं नैयायिकादेरित्यादिरेकान्तस्तस्य प्रमाणस्य विषयाभासः । आदिशब्दान्नित्यमेवानित्यमेव तद्द्वयं वा परस्परानिरपेक्षमित्याद्येकान्तपरिग्रहः ॥ ८६ ॥

अथ फलाभासमाहुः-

**अभिन्नमेव भिन्नमेव वा प्रमाणात्फलं तस्य तदाभासम् ॥ ८७ ॥**

अभिन्नमेव प्रमाणात्फलं बौद्धानां, भिन्नमेव नैयायिकादीनां तस्य

प्रमाणस्य तदाभासं फलाभासं; यथा फलस्य भेदाभेदैकान्तावेकान्तावेव तथा सूत्रत एव प्रागुपपादितमिति ॥ ८७ ॥

इति प्रमाणनयतत्त्वालोकालङ्कारे श्रीरत्नप्रभाचार्यविरचितायां
रत्नाकरावतारिकाख्यलघुटीकायां फलप्रमाणस्वरूपाभासा-



अर्हम्

# अथ सप्तमः परिच्छेदः ।



एतावता प्रमाणतत्त्वं व्यवस्थाप्येदानीं नयतत्त्वं व्यवस्थापयन्ति—

**नीयते येन श्रुताख्यप्रमाणविषयीकृतस्यार्थस्यांशस्तदितरांशौदासीन्यतः स प्रतिपत्तुरभिप्रायविशेषो नयः॥१॥**

अत्रैकवचनमतन्त्रं तेनांशावंशा वा, येन परामर्शविशेषेण श्रुतप्रमाणप्रतिपन्नवस्तुनो विषयीक्रियन्ते तदितरांशौदासीन्यापेक्षया स नयोऽभिधीयते । तदितरांशप्रतिक्षेपे तु तदाभासता भणिष्यते । प्रत्यपादयाम च स्तुतिद्वात्रिंशति—

अहो ! चित्रं चित्रं तव चरितमेतन्मुनिपते !
स्वकीयानामेषां विविधविषयव्याप्तिवशिनाम् ।
विपक्षापेक्षाणां कथयसि नयानां सुनयतां
विपक्षक्षेप्तॄणां पुनरिह विभो ! दुष्टनयताम् ॥ १ ॥

पञ्चाशति च—

निःशेषांशजुषां प्रमाणविषयीभूयं समासेदुषां
वस्तूनां नियतांशकल्पनपराः सप्त श्रुतासङ्गिनः ।
औदासीन्यपरायणास्तदपरे चांशे भवेयुर्नया-
श्चेदेकान्तकलङ्कपङ्ककलुषास्ते स्युस्तदा दुर्नयाः ॥ १ ॥

ननु नयस्य प्रमाणाद्भेदेन लक्षणप्रणयनमयुक्तम् । स्वार्थव्यवसायात्मकत्वेन तस्य प्रमाणस्वरूपत्वात् । तथाहि—नयः प्रमाणमेव, स्वार्थव्यवसायकत्वादिष्टप्रमाणवत् स्वार्थव्यवसायकस्याप्यस्य प्रमाणत्वानभ्युपगमे प्रमाणस्यापि तथाविधस्य प्रमाणत्वं न स्यादिति कश्चित् । तदसत् । नयस्य स्वार्थैकदेशनिर्णीतिलक्षणत्वेन स्वार्थव्यवसायकत्वासिद्धेः । ननु नयविषयतया संमतोऽर्थैकदेशोऽपि यदि वस्तु तदा तत्परिच्छेदी

नयः प्रमाणमेव, वस्तुपरिच्छेदलक्षणत्वात्प्रमाणस्य। स न चेद्वस्तु तर्हि तद्विषयो नयो मिथ्याज्ञानमेव स्यात्, तस्यावस्तुविषयत्वलक्षणत्वादिति चेत्। तदवद्यम्। अर्थैकदेशस्य वस्तुत्वावस्तुत्वपरिहारेण वस्त्वंशतया प्रतिज्ञानात्। तथा चावाचि–

नायं वस्तु न चावस्तु वस्त्वंशः कथ्यते बुधैः।
नासमुद्रः समुद्रो वा समुद्रांशो यथैव हि ॥ १ ॥
तन्मात्रस्य समुद्रत्वे शेषांशस्यासमुद्रता।
समुद्रबहुता वा स्यात् तत्त्वे क्वास्तु समुद्रवित्?॥ २ ॥

यथैव हि समुद्रांशस्य समुद्रत्वे शेषसमुद्रांशानामसमुद्रत्वप्रसङ्गात् समुद्रबहुत्वापत्तेर्वा; तेषामपि प्रत्येकं समुद्रत्वात्। तस्यासमुद्रत्वे वा शेषसमुद्रांशानामप्यसमुद्रत्वात् क्वचिदपि समुद्रव्यवहारायोगात्। समुद्रांशः समुद्रांश एवोच्यते, तथा स्वार्थैकदेशो नयस्य न वस्तु, स्वार्थैकदेशान्तराणामवस्तुत्वप्रसङ्गाद् वस्तुबहुत्वानुषक्तेर्वा; नाप्यवस्तु, शेषांशानामप्यवस्तुत्वेन क्वचिदपि वस्तुव्यवस्थाऽनुपपत्तेः। किं तर्हि वस्त्वंश एवासौ तादृक्प्रतीतेर्बाधकाभावात्? ततो वस्त्वंशे प्रवर्त्तमानो नयः स्वार्थैकदेशव्यवसायलक्षणो न प्रमाणं, नापि मिथ्याज्ञानमिति ॥ १ ॥

नयसामान्यलक्षणमुक्त्वा नयाभासस्य तद्दर्शयितुमाहुः–

## स्वाभिप्रेतादंशादितरांशापलापी पुनर्नयाभासः ॥ २ ॥

पुनः शब्दो नयात् व्यतिरेकं द्योतयति। नयाभासो नयप्रतिबिम्बात्मा दुर्नय इत्यर्थः। यथा तीर्थिकानां नित्यानित्याद्येकान्तप्रदर्शकं सकलं वाक्यमिति ॥ २ ॥

नयप्रकारसूचनायाहुः–

व्यासनयप्रकारान् प्रकाशयन्ति—

व्यासतोऽनेकविकल्पः ॥ ४ ॥

एकांशगोचरस्य हि प्रतिपत्त्रभिप्रायविशेषस्य नयस्वरूपत्वमुक्तं, ततश्चानन्तांशात्मके वस्तुन्येकैकांशपर्यवसायिनो यावन्तः प्रतिपत्तॄणामभिप्रायास्तावन्तो नयाः, ते च नियतसंख्यया संख्यातुं न शक्यन्त इति व्यासतो नयस्याऽनेकप्रकारत्वमुक्तम् ॥ ४ ॥

समासनयं भेदतो दर्शयन्ति—

समासतस्तु द्विभेदो द्रव्यार्थिकः पर्यायार्थिकश्च ॥ ५ ॥

नय इत्यनुवर्तते; द्रवति द्रोष्यति अदुद्रुवत् तांस्तान् पर्यायानिति द्रव्यं तदेवार्थः, सोऽस्ति यस्य विषयत्वेन स द्रव्यार्थिकः । पर्येत्युत्पादविनाशौ प्राप्नोतीति पर्यायः स एवार्थः, सोऽस्ति यस्याऽसौ पर्यायार्थिकः । एतावेव च द्रव्यास्तिकपर्यायास्तिकाविति, द्रव्यस्थितपर्यायस्थिताविति, द्रव्यार्थपर्यायार्थाविति च प्रोच्येते । ननु गुणविषयस्तृतीयो गुणार्थिकोऽपि किमिति नोक्त इति चेत्, गुणस्य पर्याय एवान्तर्भूतत्वेन पर्यायार्थिकेनैव तत्संग्रहात् । पर्यायो हि द्विविधः—क्रमभावी सहभावी च । तत्र सहभावी गुण इत्यभिधीयते । पर्यायशब्देन तु पर्यायसामान्यस्य स्वव्यक्तिव्यापिनोऽभिधानान्न दोषः । ननु द्रव्यपर्यायव्यतिरिक्तौ सामान्यविशेषौ विद्येते ततस्तद्गोचरमपरमपि नयद्वयं प्राप्नोतीति चेत् । नैतदनुपद्रवम् । द्रव्यपर्यायाभ्यां व्यतिरिक्तयोः सामान्यविशेषयोरप्रसिद्धेः । तथाहि—द्विप्रकारं सामान्यमुक्तम्—ऊर्द्धतासामान्यं तिर्यक्सामान्यं च । तत्रोर्द्धतासामान्यं द्रव्यमेव; तिर्यक्सामान्यं तु प्रतिव्यक्तिसदृशपरिणामलक्षणं व्यञ्जनपर्याय एव । स्थूलाः कालान्तरस्थायिनः शब्दानां सङ्केतविषया व्यञ्जनपर्याया इति प्रावचनिकप्रसिद्धेः । विशेषोऽपि वैसदृश्यविवर्तलक्षणः पर्याय एवान्तर्भवतीति नैताभ्यामधिकनयावकाशः ॥ ५ ॥

द्रव्यार्थिकभेदानाहुः—

आद्यो नैगमसंग्रहव्यवहारभेदात् त्रेधा ॥ ६ ॥

आद्यो द्रव्यार्थिकः ॥ ६ ॥

तत्र नैगमं प्ररूपयन्ति-

धर्मयोर्धर्मिणोर्धर्मधर्मिणोश्च प्रधानोपसर्जनभावेन यद्विवक्षणं स नैकगमो नैगमः ॥ ७ ॥

पर्याययोर्द्रव्ययोर्द्रव्यपर्याययोश्च मुख्यामुख्यरूपतया यद्विवक्षणं स एवंरूपो नैके गमा बोधमार्गा यस्याऽसौ नैगमो नाम नयो ज्ञेयः ॥७॥

अथास्योदाहरणाय सूत्रत्रयीमाहुः-

सच्चैतन्यमात्मनीति धर्मयोः ॥ ८ ॥

प्रधानोपसर्जनभावेन विवक्षणमितीहोत्तरत्र च सूत्रद्वये योजनीयम्। अत्र चैतन्याख्यस्य व्यञ्जनपर्यायस्य प्राधान्येन विवक्षणम्; विशेष्यत्वात्। सत्त्वाख्यस्य तु व्यञ्जनपर्यायस्योपसर्जनभावेन; तस्य चैतन्यविशेषणत्वादिति धर्मद्वयगोचरो नैगमस्य प्रथमो भेदः ॥ ८ ॥

वस्तु पर्यायवद् द्रव्यमिति धर्मिणोः ॥९॥

अत्र हि पर्यायवद् द्रव्यं वस्तु वर्त्तत इति विवक्षायां पर्यायवद् द्रव्याख्यस्य धर्मिणो विशेष्यत्वेन प्राधान्यम्, वस्त्वाख्यस्य तु विशेषणत्वेन गौणत्वम्। यद्वा। किं वस्तु पर्यायवद् द्रव्यमिति विवक्षायां वस्तुनो विशेष्यत्वात् प्राधान्यम्, पर्यायवद् द्रव्यस्य तु विशेषणत्वात् गौणत्वमिति धर्मियुग्मगोचरोऽयं नैगमस्य द्वितीयो भेदः ॥ ९ ॥

क्षणमेकं सुखी विषयासक्तजीव इति धर्मधर्मिणोः ॥१०॥

अत्र हि विषयासक्तजीवाख्यस्य धर्मिणो मुख्यता, विशेष्यत्वात्, सुखलक्षणस्य तु धर्मस्याप्रधानता, तद्विशेषणत्वेनोपात्तत्वादिति धर्मधर्म्यालम्बनोऽयं नैगमस्य तृतीयो भेदः। नचास्यैवं प्रमाणात्मकत्वानुषङ्गो धर्मधर्मिणोः प्राधान्येनात्र ज्ञप्तेरसंभवात् तयोरन्यतर एव हि नैगमनयेन प्रधानतयाऽनुभूयते। प्राधान्येन द्रव्यपर्यायद्वयात्मकं चार्थमनुभवद्विज्ञानं प्रमाणं प्रतिपत्तव्यं नान्यत् ॥ १० ॥

अथ नैगमाभासमाहुः—

**धर्मद्वयादीनामैकान्तिकपार्थक्याभिसन्धिर्नैगमाभासः ॥ ११ ॥**

आदिशब्दाद् धर्मिद्वयधर्मधर्मिद्वययोः परिग्रहः । ऐकान्तिकपार्थक्याभिसन्धिरैकान्तिकभेदाभिप्रायो नैगमाभासो नैगमदुर्नय इत्यर्थः ॥ ११ ॥

अत्रोदाहरन्ति—

**यथाऽऽत्मनि सत्त्वचैतन्ये परस्परमत्यन्तं पृथग्भूते इत्यादिः ॥ १२ ॥**

आदिशब्दाद्वस्त्वाख्यपर्यायवद्द्रव्याख्ययोर्धर्मिणोः सुखजीवलक्षणयोर्धर्मधर्मिणोश्च सर्वथा पार्थक्येन कथनं तदाभासत्वेन द्रष्टव्यम् । नैयायिकवैशेषिकदर्शनं चैतदाभासतया ज्ञेयम् ॥ १२ ॥

अथ संग्रहस्वरूपमुपवर्णयन्ति—

**सामान्यमात्रग्राही परामर्शः संग्रहः ॥ १३ ॥**

सामान्यमात्रमशेषविशेषरहितं सत्त्वद्रव्यत्वादिकं गृह्णातीत्येवंशीलः, समेकीभावेन पिण्डीभूततया विशेषराशिं गृह्णातीति संग्रहः। अयमर्थः। स्वजातेर्दृष्टेष्टाभ्यामविरोधेन विशेषाणामेकरूपतया यद् ग्रहणं स संग्रह इति ॥१३॥

अमुं भेदतो दर्शयन्ति—

**अयमुभयविकल्पः परोऽपरश्च ॥ १४ ॥**

तत्र परसंग्रहमाहुः—

**अशेषविशेषेष्वौदासीन्यं भजमानः शुद्धद्रव्यं सन्मात्रमभिमन्यमानः परसंग्रहः ॥ १५ ॥**

परामर्श इत्यग्रेतनेऽपि योजनीयम् ॥ १५ ॥

उदाहरन्ति-

विश्वमेकं सदविशेषादिति यथा ॥ १६ ॥

अस्मिन् उक्ते हि सदितिज्ञानाभिधानानुवृत्तिलिङ्गानुमितसत्ताकत्वेनैकत्वमशेषार्थानां संगृह्यते ॥ १६ ॥

एतदाभासमाहुः-

सत्ताऽद्वैतं स्वीकुर्वाणः सकलविशेषान्निराचक्षाणस्तदाभासः ॥ १७ ॥

अशेषविशेषेष्वौदासीन्यं भजमानो हि परामर्शविशेषः संग्रहाख्यां लभते, न चायं तथेति तदाभासः ॥ १७ ॥

उदाहरन्ति-

यथा सत्तैव तत्त्वं ततः पृथग्भूतानां विशेषाणामदर्शनात् ॥ १८ ॥

अद्वैतवादिदर्शनान्यखिलानि सांख्यदर्शनं चैतदाभासत्वेन प्रत्येयम्। अद्वैतवादस्य सर्वस्यापि दृष्टेष्टाभ्यां विरुध्यमानत्वात् ॥ १८ ॥

अथापरसंग्रहमाहुः-

द्रव्यत्वादीन्यवान्तरसामान्यानि मन्वानस्तद्भेदेषु गजनिमीलिकामवलम्बमानः पुनरपरसंग्रहः ॥ १९ ॥

द्रव्यत्वमादिर्येषां पर्यायत्वप्रभृतीनां तानि तथा, अवान्तरसामान्यानि सत्ताख्यमहासामान्यापेक्षया कतिपयव्यक्तिनिष्ठानि तद्भेदेषु द्रव्यत्वाद्याश्रयभूतविशेषेषु द्रव्यपर्यायादिषु गजनिमीलिकामुपेक्षाम् ॥ १९ ॥

उदाहरन्ति-

अत्र द्रव्यं द्रव्यमित्यभिन्नज्ञानाभिधानलक्षणलिङ्गानुमितद्रव्यत्वात्मकत्वेनैक्यं षण्णामपि धर्मादिद्रव्याणां संगृह्यते । आदिशब्दाच्चेतनाचेतनपर्यायाणां सर्वेषामेकत्वम्; पर्यायत्वाविशेषादित्यादि दृश्यम् ॥२०॥

एतदाभासमाहुः-

**द्रव्यत्वादिकं प्रतिजानानस्तद्विशेषान्निह्नुवानस्तदाभासः ॥ २१ ॥**

तदाभासोऽपरसंग्रहाभासः ॥ २१ ॥

उदाहरन्ति-

**यथा द्रव्यत्वमेव तत्त्वं, ततोऽर्थान्तरभूतानां द्रव्याणामनुपलब्धेरित्यादिः ॥ २२ ॥**

अयं हि द्रव्यत्वस्यैव तात्त्विकतां प्रख्यापयति, तद्विशेषभूतानि तु धर्मादिद्रव्याण्यपह्नुत इत्यपरसंग्रहाभासनिदर्शनम् । सर्वत्र संग्रहाभासत्वे कारणं प्रमाणविरोध एव, सामान्यविशेषात्मनो वस्तुनस्तेन प्रतीतेरभिहितत्वात् ॥ २२ ॥

अथ व्यवहारनयं व्याहरन्ति-

**संग्रहेण गोचरीकृतानामर्थानां विधिपूर्वकमवहरणं येनाभिसन्धिना क्रियते स व्यवहारः ॥ २३ ॥**

संग्रहगृहीतान् सत्त्वाद्यर्थान् विधाय न तु निषिध्य यः परामर्शविशेषस्तानेव विभजते, स व्यवहारनयस्तज्ज्ञैः कीर्त्यते ॥ २३ ॥

उदाहरन्ति-

**यथा यत्सत्तद् द्रव्यं पर्यायो वेत्यादिः ॥ २४ ॥**

आदिशब्दादपरसंग्रहगृहीतार्थगोचरव्यवहारोदाहरणं दृश्यम् । यद् द्रव्यं तज्जीवादि षड्विधं, यः पर्यायः स द्विविधः-क्रमभावी सहभावी चेति । एवं यो जीवः स मुक्तः संसारी च, यः क्रमभावी पर्यायः स क्रियारूपोऽक्रियारूपश्चेत्यादि ॥ २४ ॥

एतदाभासं वर्णयन्ति—

**यः पुनरपारमार्थिकद्रव्यपर्यायविभागमभिप्रैति स व्यवहाराभासः ॥ २५ ॥**

यः पुनः परामर्शविशेषः कल्पनाऽऽरोपितद्रव्यपर्यायप्रविवेकं मन्यते सोऽत्र व्यवहारदुर्नयः प्रत्येयः ॥ २५ ॥

उदाहरन्ति—

**यथा चार्वाकदर्शनम् ॥ २६ ॥**

चार्वाको हि प्रमाणप्रतिपन्नं जीवद्रव्यपर्यायादिप्रविभागं कल्पनाऽऽरोपितत्वेनापह्नुते, अविचारितरमणीयं भूतचतुष्टयप्रविभागमात्रं तु स्थूललोकव्यवहारानुयायितया समर्थयत इत्यस्य दर्शनं व्यवहारनयाभासतयोपदर्शितम् ॥ २६ ॥

द्रव्यार्थिकं त्रेधाऽभिधाय पर्यायार्थिकं प्रपञ्चयन्ति—

**पर्यायार्थिकश्चतुर्द्धा ऋजुसूत्रः शब्दः समभिरूढ एवंभूतश्च ॥ २७ ॥**

एषु ऋजुसूत्रं तावद्वितन्वन्ति—

**ऋजु वर्त्तमानक्षणस्थायि पर्यायमात्रं प्राधान्यतः सूत्रयन्नभिप्राय ऋजुसूत्रः ॥ २८ ॥**

ऋजु अतीतानागतकालक्षणलक्षणकौटिल्यवैकल्यात् प्राञ्जलम्। अयं हि द्रव्यं सदपि गुणीभावान्नार्पयति, पर्यायांस्तु क्षणध्वंसिन प्रधानतया दर्शयतीति ॥ २८ ॥

उदाहरन्ति—

**यथा सुखविवर्त्तः सम्प्रत्यस्तीत्यादिः ॥ २९ ॥**

अनेन हि वाक्येन क्षणस्थायिसुखाख्यं पर्यायमात्रं प्राधान्ये दर्श्यते, तदधिकरणभूतं पुनरात्मद्रव्यं गौणतया नार्प्यते। अ

दिशब्दाद् दुःखपर्यायोऽधुनाऽस्तीत्यादिकं प्रकृतनयनिदर्शनमभ्यूह-नीयम् ॥ २९ ॥

ऋजुसूत्राभासं ब्रुवते–

**सर्वथा द्रव्यापलापी तदाभासः ॥ ३० ॥**

सर्वथा गुणप्रधानभावाभावप्रकारेण तदाभास ऋजुसूत्राभासः॥३०॥

उदाहरन्ति–

**यथा तथागतमतम् ॥ ३१ ॥**

तथागतो हि प्रतिक्षणविनश्वरान् पर्यायानेव पारमार्थिकतया समर्थयते, तदाधारभूतं तु प्रत्यभिज्ञादिप्रमाणप्रसिद्धं त्रिकालस्था-यि द्रव्यं तिरस्कुरुत इत्येतन्मतं तदाभासतयोदाहृतम् ॥ ३१ ॥

शब्दनयं शब्दयन्ति–

**कालादिभेदेन ध्वनेरर्थभेदं प्रतिपद्यमानः शब्दः॥ ३२ ॥**

कालादिभेदेन कालकारकलिङ्गसंख्यापुरुषोपसर्गभेदेन ॥ ३२ ॥

उदाहरन्ति–

**यथा बभूव भवति भविष्यति सुमेरुरित्यादिः ॥ ३३ ॥**

अत्रातीतवर्त्तमानभविष्यल्लक्षणकालत्रयभेदात्कनकाचलस्य भेदं शब्दनयः प्रतिपद्यते । द्रव्यरूपतया पुनरभेदममुष्योपेक्षते । एतच्च कालभेदे उदाहरणम् । करोति क्रियते कुम्भ इति कारकभेदे, तटस्तटी तटमिति लिङ्गभेदे, दाराः कलत्रमित्यादि संख्याभेदे, एहि मन्ये रथेन यास्यसि नहि यास्यसि यातस्ते पितेति पुरुषभेदे, सन्तिष्ठते अवतिष्ठत इत्युपसर्गभेदे ॥ ३३ ॥

एतदाभासं ब्रुवते–

**तद्भेदेन तस्य तमेव समर्थयमानस्तदाभासः ॥३४॥**

तद्भेदेन कालादिभेदेन तस्य ध्वनेस्तमेवार्थभेदमेव; तदाभासः शब्दाभासः ॥ ३४ ॥

उदाहरन्ति-

यथा बभूव भवति भविष्यति सुमेरुरित्यादयो भिन्नकालाः शब्दा भिन्नमेवार्थमभिदधाति भिन्नकालशब्दत्वात् तादृक्सिद्धान्यशब्दवदित्यादिः ॥३५॥

अनेन हि तथाविधपरामर्शोत्थेन वचनेन कालादिभेदाद्भिन्नस्यै वार्थस्याभिधायकत्वं शब्दानां व्यवस्थितम् । एतच्च प्रमाणविरुद्धमिति तद्वचनस्य शब्दनयाभासत्वम् । आदिशब्देन करोति क्रियते कट इत्यादिशब्दनयाभासोदाहरणं सूचितम् ॥ ३५ ॥

समभिरूढनयं वर्णयन्ति-

पर्यायशब्देषु निरुक्तिभेदेन भिन्नमर्थं समभिरोहन् समभिरूढः ॥ ३६ ॥

शब्दनयो हि पर्यायभेदेऽप्यर्थाभेदमभिप्रैति, समभिरूढस्तु पर्यायभेदे भिन्नानर्थानभिमन्यते, अभेदं त्वर्थगतं पर्यायशब्दानामुपेक्षत इति ॥ ३६ ॥

उदाहरन्ति-

इन्दनादिन्द्रः शकनाच्छक्रः पूर्दारणात् पुरन्दर इत्यादिषु यथा ॥ ३७ ॥

इत्यादिषु पर्यायशब्देषु यथा निरुक्तिभेदेन भिन्नमर्थं समभिरोहन्नभिप्रायविशेषः समभिरूढस्तथाऽन्येष्वपि घटकुटकुम्भादिषु द्रष्टव्यः ॥ ३७ ॥

एतदाभासमाभाषन्ते-

पर्यायध्वनीनामभिधेयनानात्वमेव कक्षीकुर्वाणस्त-

उदाहरन्ति–

**यथेन्द्रः शक्रः पुरन्दर इत्यादयः शब्दा भिन्नाभिधेया एव भिन्नशब्दत्वात् करिकुरङ्गतुरङ्गशब्दवदित्यादिः ॥३९॥**

एवंभूतनयं प्रकाशयन्ति–

**शब्दानां स्वप्रवृत्तिनिमित्तभूतक्रियाविष्टमर्थं वाच्यत्वेनाभ्युपगच्छन्नेवंभूतः ॥४०॥**

समभिरूढनयो हीन्दनादिक्रियायां सत्यामसत्यां च वासवादेरर्थस्येन्द्रादिव्यपदेशमभिप्रैति, पशुविशेषस्य गमनक्रियायां सत्यामसत्यां च गोव्यपदेशवत् तथा रूढेः सद्भावात् । एवंभूतः पुनरिन्दनादिक्रियापरिणतमर्थं तत्क्रियाकाले इन्द्रादिव्यपदेशभाजमभिमन्यते; न हि कश्चिदक्रियाशब्दोऽस्यास्ति, गौरश्व इत्यादिजातिशब्दाभिमतानामपि क्रियाशब्दत्वात्–गच्छतीति गौः, आशुगामित्वादश्व इति । शुक्लो नील इति गुणशब्दाभिमता अपि क्रियाशब्दा एव—शुचिभवनात् शुक्लो नीलनान्नील इति । देवदत्तो यज्ञदत्त इति यदृच्छाशब्दाभिमता अपि क्रियाशब्दा एव–देव एनं देयात्, यज्ञ एनं देयादिति । संयोगिद्रव्यशब्दाः समवायिद्रव्यशब्दाश्चाभिमताः क्रियाशब्दा एव–दण्डोऽस्यास्तीति दण्डी, विषाणमस्यास्तीति विषाणीत्यस्तिक्रियाप्रधानत्वात् । पञ्चतयी तु शब्दानां व्यवहारमात्राद् न निश्चयादित्ययं नयः स्वीकुरुते ॥ ४० ॥

उदाहरन्ति—

**यथेन्दनमनुभवन्निन्द्रः शकनक्रियापरिणतः शक्रः पूर्दारणप्रवृत्तः पुरन्दर इत्युच्यते ॥ ४१ ॥**

एवंभूताभासमाचक्षते—

**क्रियाऽनाविष्टं वस्तु शब्दवाच्यतया प्रतिक्षिपंस्तु तदाभासः ॥ ४२ ॥**

क्रियाऽऽविष्टं वस्तु ध्वनीनामभिधेयतया प्रतिजानानोऽपि यः परामर्शस्तदनाविष्टं तत्तेषां तथा प्रतिक्षिपति नतूपेक्षते स एवंभूतनयाभासः, प्रतीतिविघातात् ॥ ४२ ॥

उदाहरन्ति—

यथा विशिष्टचेष्टाशून्यं घटाख्यं वस्तु न घटशब्दवाच्यं घटशब्दप्रवृत्तिनिमित्तभूतक्रियाशून्यत्वात् पटवदित्यादिः ॥ ४३ ॥

अनेन हि वचसा क्रियाऽनाविष्टस्य घटादेर्वस्तुनो घटादिशब्दवाच्यतानिषेधः क्रियते स च प्रमाणबाधित इति तद्वचनमेवंभूतनयाभासोदाहरणतयोक्तम् ॥ ४३ ॥

के पुनरेषु नयेष्वर्थप्रधानाः के च शब्दनया इति दर्शयन्ति—

एतेषु चत्वारः प्रथमेऽर्थनिरूपणप्रवणत्वादर्थनयाः ॥४४॥

शेषास्तु त्रयः शब्दवाच्यार्थगोचरतया शब्दनयाः ॥४५॥

कः पुनरत्र बहुविषयः को वाऽल्पविषयो नय इति विवेचयन्ति—

पूर्वः पूर्वो नयः प्रचुरगोचरः, परः परस्तु परिमितविषयः ॥ ४६ ॥

तत्र नैगमसंग्रहयोस्तावन्न संग्रहो बहुविषयो नैगमात्परः किं तर्हि नैगम एव संग्रहात्पूर्व इत्याहुः—

सन्मात्रगोचरात्संग्रहान्नैगमो भावाभावभूमिकत्वाद् भूमविषयः ॥ ४७ ॥

भावाभावभूमिकत्वाद्भावाभावविषयत्वात्, भूमविषयो बहुविषयः ॥ ४७ ॥

संग्रहाद् व्यवहारो बहुविषय इति विपर्ययमपास्यन्ति—

सद्विशेषप्रकाशकाद्व्यवहारतः संग्रहः समस्तसत्समूहोप-

दर्शकत्वात् बहुविषयः ॥ ४८ ॥

व्यवहारो हि कतिपयान् सत्प्रकारान् प्रकाशयतीत्यल्पविषयः, संग्रहस्तु सकलसत्प्रकाराणां समूहं ख्यापयतीति बहुविषयः ॥ ४८॥

व्यवहारात् ऋजुसूत्रो बहुविषय इति विपर्यासं निरस्यन्ति–

वर्त्तमानविषयादृजुसूत्राद्व्यवहारस्त्रिकालविषयावलम्बित्वादनल्पार्थः ॥ ४९ ॥

वर्त्तमानक्षणमात्रस्थायिनमर्थमृजुसूत्रः सूत्रयतीत्यसावल्पविषयः, व्यवहारस्तु कालत्रितयवर्त्त्यर्थजातमवलम्बत इत्ययमनल्पार्थ इति॥४९॥

ऋजुसूत्राच्छब्दो बहुविषय इत्याशङ्कामपसारयन्ति–

कालादिभेदेन भिन्नार्थोपदर्शिनः शब्दादृजुसूत्रस्तद्विपरीतवेदकत्वान्महार्थः ॥ ५० ॥

शब्दनयो हि कालादिभेदाद्भिन्नमर्थमुपदर्शयतीति स्तोकविषयः, ऋजुसूत्रस्तु कालादिभेदतोऽप्यभिन्नमर्थं सूचयतीति बहुविषय इति॥५०॥

शब्दात्समभिरूढो महार्थ इत्यारेकां पराकुर्वन्ति–

प्रतिपर्यायशब्दमर्थभेदमभीप्सतः समभिरूढाच्छब्दस्तद्विपर्ययानुयायित्वात् प्रभूतविषयः ॥ ५१ ॥

समभिरूढनयो हि पर्यायशब्दानां व्युत्पत्तिभेदेन भिन्नार्थतामर्थयत इति तनुगोचरोऽसौ, शब्दनयस्तु तेषां तद्भेदेनाप्येकार्थतां समर्थयत इति समधिकविषयः ॥ ५१ ॥

समभिरूढादेवंभूतो भूमविषय इत्यप्याकूतं प्रतिक्षिपन्ति–

प्रतिक्रियं विभिन्नमर्थं प्रतिजानानादेवंभूतात्समभिरूढस्तदन्यथार्थस्थापकत्वान्महागोचरः ॥ ५२ ॥

एवंभूतनयो हि क्रियाभेदेन भिन्नमर्थं प्रतिजानीत इति तुच्छविषयोऽसौ, समभिरूढस्तु तद्भेदेनाप्यभिन्नं भावमभिप्रैतीति प्रभूतविषयः ॥ ५२ ॥

अथ यथा नयवाक्यं प्रवर्त्तते तथा प्रकाशयन्ति—

**नयवाक्यमपि स्वविषये प्रवर्त्तमानं विधिप्रतिषेधाभ्यां सप्तभङ्गीमनुव्रजति ॥ ५३ ॥**

नयवाक्यं प्राग्लक्षितविकलादेशस्वरूपं; न केवलं सकलादेशस्वभावं प्रमाणवाक्यमित्यपि शब्दार्थः । स्वविषये स्वाभिधेये प्रवर्त्तमानं विधिप्रतिषेधाभ्यां परस्परविभिन्नार्थनययुग्मसमुत्थविधाननिषेधाभ्यां कृत्वा सप्तभङ्गीमनुगच्छति, प्रमाणसप्तभङ्गीवदेतद्विचारः कर्त्तव्यः । नयसप्तभङ्गीष्वपि प्रतिभङ्गं स्यात्कारस्यैवकारस्य च प्रयोगसद्भावात् । तासां विकलादेशत्वादेव सकलादेशात्मिकायाः प्रमाणसप्तभङ्ग्या विशेषव्यवस्थापनात् । विकलादेशस्वभावा हि नयसप्तभङ्गी वस्त्वंशमात्रप्ररूपकत्वात्; सकलादेशस्वभावा तु प्रमाणसप्तभङ्गी संपूर्णवस्तुस्वरूपप्ररूपकत्वादिति ॥ ५३ ॥

एवं नयस्य लक्षणसंख्याविषयान् व्यवस्थाप्येदानीं फलं स्फुटयन्ति—

**प्रमाणवदस्य फलं व्यवस्थापनीयम् ॥ ५४ ॥**

प्रमाणस्येव प्रमाणवत्, अस्येति नयस्य, यथा खल्वानन्तर्येण प्रमाणस्य संपूर्णवस्त्वज्ञाननिवृत्तिः फलमुक्तम्, तथा नयस्यापि वस्त्वेकदेशाज्ञाननिवृत्तिः फलमानन्तर्येणावधार्यम् । यथा च पारंपर्येण प्रमाणस्योपादानहानोपेक्षाबुद्धयः संपूर्णवस्तुविषयाः फलत्वेनाभिहितास्तथा नयस्यापि वस्त्वंशविषयास्ताः परम्पराफलत्वेनावधारणीयाः । तदेतद् द्विप्रकारमपि नयस्य फलं ततः कथञ्चिद्भिन्नमभिन्नं वाऽवगन्तव्यम् । नयफलत्वान्यथानुपपत्तेः कथञ्चिद्भेदाभेदप्रतिष्ठा च नयफलयोः प्रागुक्तप्रमाणफलयोरिव कुशलैः कर्त्तव्या ॥ ५४ ॥

तदित्थं प्रमाणनयतत्त्वं व्यवस्थाप्य संप्रति तेषां तत्र कथञ्चिद्विष्वग्भावेनावस्थितेरखिलप्रमाणनयानां व्यापकं प्रमातारं स्वरूपतो व्यवस्थापयन्ति—

प्रमिणोतीति प्रमाता, किंभूतः क इत्याह-प्रत्यक्षादिप्रसिद्धः प्रत्यक्षपरोक्षप्रमाणप्रतीतः, अतति अपरापरपर्यायान् सततं गच्छतीत्यात्मा जीवः । इहात्मानं प्रति विप्रतिपेदिरे परे । चार्वाकास्तावच्चर्चयांचक्रुः—कायाकारपरिणामदशायामभिव्यक्तचैतन्यधर्मकाणि पृथिव्यप्तेजोवायुसंज्ञकानि चत्वार्येव भूतानि तत्त्वम्, न तु तद्व्यतिरिक्तः कश्चिद् भवान्तरानुसरणव्यसनवानात्मा; यदुवाच बृहस्पतिः—"पृथिव्यापस्तेजो वायुरिति तत्त्वानि, तत्समुदाये शरीरविषयेन्द्रियसंज्ञाः; तेभ्यश्चैतन्यम्" इति प्रत्येकमदृश्यमानचैतन्यान्यपि च भूतानि समुदितावस्थानि चैतन्यं व्यञ्जयिष्यन्ति, मदशक्तिवत्; यथा हि काष्ठपिष्टादयः प्रागदृश्यमानामपि मदशक्तिमासादितसुराकारपरिणामा व्यञ्जयन्ति; तद्वदेतान्यपि चैतन्यमिति । तदेतत् तरलतरमतिविलसितम्, कायाकारपरिणतभूतैश्चैतन्याभिव्यक्तेरसिद्धेः,सतः खल्वभिव्यक्तिर्युक्ता। न च देहदशायाः प्राग् भूतेषु चैतन्यसत्तासाधकं प्रत्यक्षमस्ति, तस्यैन्द्रियकस्यातीन्द्रिये तस्मिन्नप्रवर्तनात्, अनैन्द्रियकस्य तस्य त्वयाऽनङ्गीकाराच्च । नाप्यनुमानम्, तस्याप्यनङ्गीकारादेव । अथ स्वीक्रियत एव लोकयात्रानिर्वाहणप्रवणं धूमाद्यनुमानम्, स्वर्गापूर्वादिप्रसाधकस्यालौकिकस्यैव तस्य तिरस्कारादिति चेत्; तर्हि कायाकारहेतुष्वकायाकारभूतेषु भूतेषु चैतन्यानुमानमप्यलौकिकं स्याद्, लौकिकैस्तत्र तस्याननुमीयमानत्वात्, स्वर्गापूर्वादिप्रसाधकमपि वा तद् लौकिकं भवेत् । अथोक्तं प्राक्काष्ठपिष्टप्रभृतिषु प्रत्येकमप्रतीयमानाऽपि मदशक्तिः समुदायदशायां यथाभिव्यज्यते, तथा कायाकारे चैतन्यमपीति चेत् । तदसत्यम् । यतः केयं मदशक्तिर्नाम ?। वस्तुस्वरूपमेव, अतीन्द्रिया वा काचित्। न प्राच्यः पक्षः, काष्ठपिष्टादिवस्तुस्वरूपस्यासमुदायदशायामपि सत्त्वेन तदानीमपि मदशक्तेरभिव्यक्तिप्रसक्तेः। अतीन्द्रियायास्तु तस्यास्तदानीमन्यदा वा न ते स्वीकारः सुन्दरः, प्रत्यक्षातिरिक्तप्रमाणस्य तत्साधकस्य भवतोऽभावात्। जैनैस्तदानीं स्वीकृतैव तावदियम्, समुदायदशायामभिव्यक्तिस्वीकारादिति चेत् । तदसत्, तस्यास्तदानीं तैरुत्पाद्यत्वेन स्वीकारात्,

मृत्पिण्डदण्डकुलालादिसामग्र्यां घटवत् । सति वस्तुनि ज्ञानजनन-योग्यं ह्यभिव्यञ्जकमुच्यते, प्रदीपादिवद्। न च काष्ठपिष्टादीनि मद-शक्तौ तथा, तस्याः साधकप्रमाणाभावाद्; इति कथं तद्दृष्टान्तेन चैत-न्यव्यक्तिः सिध्येत् ?। अथ भूतेभ्यश्चैतन्यमुत्पद्यमानमिष्यते । नैतदपि प्रशस्यम्, पृथगवस्थेभ्योऽपि तेभ्यस्तदुत्पत्तिप्रसक्तेः । भूतसमुदयस्वभा-वात् कायात्तदुत्पाद इति चेद्, ननु समस्ताद् व्यस्ताद् वा तस्मात् तदु-त्पद्येत । न तावत् समस्तात्, अङ्गुल्यादिच्छेदेऽपि पञ्चताप्रसङ्गात्, अन्यथा शिरश्छेदेऽप्यपञ्चत्वप्राप्तेः । नापि व्यस्ताद् एकस्मिन्नेव कायेऽनेकचैतन्योत्पत्तिप्रसङ्गात्। अथैकः शरीरावयवी तत एकमेव चैतन्यमुत्पद्यते । तदप्यसूक्ष्मम्, अक्षपादमत एव तादृशावयविस्वी-कारात्, त्वन्मते तु " समुदयमात्रमिदं कलेवरम् " इत्यभिधानात् । किञ्च, शरीरस्यावैकल्याद् मृतशरीरेऽपि चैतन्योत्पत्तिः स्यात् । अथ वातादिदोषैर्वैगुण्याद् न मृतशरीरस्य चैतन्योत्पादकत्वम् । नैतद् युक्तम् । यतो मृतस्य समीभवन्ति दोषास्ततो देहस्याऽऽरोग्यलाभः, तथाचोक्तम्—"तेषां समत्वमारोग्यं क्षयवृद्धी विपर्यये" इति; ततश्च पुनरुज्जीवनं स्यात्। अथ समीकरणं दोषाणां कुतो ज्ञायते ?, ज्वरादि-विकारादर्शनात्। अथ वैगुण्यकारिणि निवृत्तेऽपि नावश्यं तत्कृतस्य वैगुण्यस्य निवृत्तिः, यथा वह्निनिवृत्तावपि न काष्ठे श्यामिकाकौटि-ल्यादिविकारस्य । तदप्यसूपपादम् । यतः किञ्चित् क्वचिदनिवर्त्त्य-विकारारम्भकं दृष्टम् ,यथा काष्ठे वह्निः श्यामिकादेः; क्वचिच्च निवर्त्त्य-विकारारम्भकम्, यथा सुवर्णे द्रवतायाः; तत्र यदि दोषविकारोऽनि-वर्त्त्यः स्यात् चिकित्साशास्त्रं वृथैव स्यात्, ततो दौर्बल्यादिविकारस्येव महतोऽपि मरणविकारस्य निवृत्तिः प्रसज्येत । अथ चिकित्साप्रयोगाद् दौर्बल्यादिनिवृत्त्युपलब्धेरपनेयविकारत्वम्, असाध्यव्याधेरुपलब्धेर-नपनेयविकारत्वं चेत्युभयथादर्शनाद् मरणानिवृत्तिः । तदसत् । यत-श्चौषधादेरलाभाद् आयुःक्षयाद् वा कश्चिदसाध्यो विकारो भवति, दोषे तु केवले विकारकारिणि नास्त्यसाध्यता । तथा हि—तेनैव व्याधि-

ना कश्चिद् म्रियते कश्चिद् न, इति नेदं दोषे केवले विकारकारिणि घटते; तस्मात् कर्माधिपत्यमेवाऽत्र सुसूत्रम्। न चैतत् परलोकादागतमात्मानं विनेति, तथाहि–एतस्योत्पादे देहः सहकारिकारणम्, उपादानकारणं वा भवेत्। प्राचि विकल्पे कलेवरस्य सहकारिभावे किमुपादानं चैतन्यस्य स्यात्? तद्व्यतिरेकेण तत्त्वान्तराभावात्। न चानुपादाना कस्यचित्कार्यस्योत्पत्तिरुपलब्धचरी, शब्दविद्युदादीनामप्यनुपादानत्वे तत्त्वचतुष्टयानन्तर्भावो भवेत्; देहाधिकोपादानाभ्युपगमे तु चैतन्यस्य निष्प्रत्यूहाऽऽत्मसिद्धिः, कायसहकृतादात्मोपादानात् तथाविधचैतन्यपर्यायोत्पादप्रसिद्धेः। नाप्युपादानकारणं कायश्चैतन्योपादेयस्य, परस्परानुयायिविकारवत्त्वं खलूपादानोपादेययोर्लक्षणम्, यथा पटानुयायिनीलिमवत्त्वं तन्तूनाम्, तन्त्वनुयायिनीलिमवत्त्वं च पटस्य; तथाहि–नीलतन्तुपटलपरिघटितमूर्त्तिः पटो नील एव भवति, शुक्लश्च पटो नीलीद्रवादिना रज्यमानो नीलतन्तुसन्तान एव भवतीति । तत्र न तावत् तनोरुपादानत्वोपपत्तिः, उपादानभावाभिमततनुभाजः शस्त्रसंपातादिजनितस्य विकारस्य वासीचन्दनकल्पानामन्यत्र गतचित्तानां वा चैतन्येऽनुपलम्भात् । यस्तु शस्त्रसंपाताद्यनन्तरं कस्यापि मूर्च्छादिश्चैतन्यविकारः, स रुधिरसंदर्शनपीडाभयादिसम्भव एव, न तु कायविकारकारणकः; पररुधिरसंदर्शनव्याघ्रादिभयोत्पन्नमूर्च्छादिवत् । अस्तु वा कायविकारकारणकोऽसौ, तथापि नोपादानकारणं कायः, तस्मिन्नवस्थामात्रकारणतया तस्य सहकारिकारणत्वस्यैवोपपत्तेः, सुवर्णद्रवतायां दहनवत् । नापि चैतन्यस्योपादेयत्वोपपत्तिः, उपादेयभावाभिमतचैतन्यजुषो हर्षविषादमूर्च्छानिद्राभीतिशोकानेकशास्त्रप्रबोधादेर्विकारस्य कायेऽनुपलम्भादिति नोक्तमुपादानलक्षणं देहस्योपपद्यते । यद्वृद्धौ; यदात्मनः कार्यस्य वृद्धिस्तत्तस्योपादानम्, यथा तन्तवः पटस्य; इत्यप्युपादानलक्षणं न तनोश्चैतन्यं प्रति युज्यते, योजनशतादिशरीरप्रमाणानामपि मत्स्यादीनामल्पतमबुद्धित्वात्, कृशतरशरीराणामपि केषांचिद् नृणां सातिशयप्रज्ञाबलशालित्वात्; या पुन-

रेषा बालकादेर्विग्रहवृद्धौ चैतन्यवृद्धिः, सा शरीरस्य चैतन्यं प्रति सहकारिभावाद्, उदकवृद्धावङ्कुरवृद्धिवत्; उपादानभावे हि नियमेन चैतन्यस्य तद्वृद्ध्यनुविधायित्वं स्याद्; न चैवम्, तथानुभवाभावात्। पूर्वाकारपरित्यागाजहद्वृत्तोत्तराकारोपादानमप्युपादानलक्षणं तनोश्चैतन्यं प्रति नास्त्येव, उपादानभावाभिमतशरीरप्राक्तनाकारपरित्यागाभावेऽपि प्रादुर्भवन्नानाप्रकारप्रकर्षरूपचैतन्यविकारोपलम्भादिति न चैतन्यं प्रत्युपादानभावोऽपि वपुषः सूपपादः। किञ्च, यथा काष्ठाद्यन्तःप्रतिष्ठादव्यक्ताज्ज्वलनाज्ज्वलनः, चन्द्रकान्तान्तर्गताद् वा तोयात् तोयं व्यक्तीभवदभ्युगतं भवता, तथाऽव्यक्ताच्चैतन्यात् कुतोऽपि पाश्चात्याद् व्यक्तचैतन्यमभ्युपगम्यताम्; तथा चात्मसिद्धिः। अथ दृश्यमानकाष्ठेन्दुकान्तादेरेव पार्थिवाज्ज्वलनोदकाद्युत्पादोऽभ्युपगम्यते, नादृश्यमानात् कुतोऽपि; तर्हि क्षीणस्ते तत्त्वचतुष्टयवादः, सर्वेषां भूम्यादीनामुपादानोपादेयभावप्रसङ्गेन जैनाभिप्रेतपुद्गलैकतत्त्ववादप्रसङ्गादिति न भूतेभ्यश्चैतन्योत्पादः सद्वादः। ननु ज्ञानं भूतान्वयव्यतिरेकानुविधायि दृश्यते, तथाहि–भूतेष्वन्नपानोपयोगतुष्टेषु पट्वी चेतना भवति, तद्विपर्यये विपर्ययः, ब्राह्मीघृताद्युपयोगसंस्कृते च कुमारकशरीरे पटुप्रज्ञता प्रजायते, वर्षासु च स्वेदादिना नातिद्वीयसैव कालेन दृष्टवयवा एव चलन्तः पूतरादिकृमिरूपा उपलभ्यन्ते, इति भूतचैतन्यपक्ष एव युक्तियुक्तो लक्ष्यत इति चेद्। नैतच्चारु। यतश्चेष्टेन्द्रियार्थाश्रयः शरीरं प्रसिद्धम्, तदनुग्रहात् तत्सहकारीन्द्रियानुग्रहे सति पटुकरणत्वाद् विषयग्रहणमपि पटुतरमेव भवति। न च विषयग्रहणादन्यच्चैतन्यं नाम, एतेन ब्राह्मीघृतोपयोगोऽपि व्याख्यातः। आत्मनो भोगायतनत्वेन शरीरस्य कदाचित् केषाञ्चिद् भूतावयवानामुपादानम्, अतः शुक्रशोणितवद् दृष्टवयवान् विकृतानुपादास्यते। तथा च स्वेदजादिभेदेन बहुभेदो भूतसर्गः प्रवर्त्तते विचित्रकर्मविपाकापेक्षयेति यत्किंचिदेतत्। आत्मप्रतीतौ किं प्रमाणमिति चेत्, प्रत्यक्षमेव तावत्, तथाहि–सुखी दुःखी वाऽहमित्याद्यहंप्रत्ययश्चेतनातत्त्वमात्माख्यमर्पयत्येव। न चायं भ्रान्तिभ्राता, विसंवादापवादवन्ध्यत्वात्।

नापि लैङ्गिकादिः, लिङ्गादितत्तत्कारणकलापोपनिपातमन्तरेणैवोत्पादात्। ततः स्पष्टप्रतिभासस्वरूपत्वेन प्रत्यक्षलक्षणोऽयमन्तर्मुखाकारतया परिस्फुरन्नात्मानमुद्द्योतयति। ननु मूर्त्तिमात्रमन्त्रणप्रवण एवैष प्रत्ययः, स्थूलोऽहं कृशोऽहमित्यादिप्रत्ययवत्; न खल्वेषोऽप्यात्मालम्बनः, तस्य स्थूलतादिधर्माधारत्वाभावादिति चेत्, तत्किमिदानीमुन्दुरवृन्दं विद्यत इति मन्दिरमादीपनीयम्?। न हि नीलः स्फटिक इत्यादि वेदनं सत्यं न संभवतीत्येतावता शुक्लः स्फटिक इत्यपि मा भूत्। स्थूलोऽहमित्याद्यपि हि ज्ञानं स्थूलशरीरवानहमित्येवं शरीरोपाधिकमुत्पद्यमानमात्मालम्बनतया सत्यमेव, यदि तु भेदं तिरस्कुर्वदुत्पद्यते तदा भ्रान्तमेव, नीलः स्फटिक-इत्यादिज्ञानवत्; अस्ति च भेदेनापि प्रतिपत्तिः—स्थूलं कृशं वा मम शरीरमिति। ननु मदीय आत्मेत्येषाऽपि प्रतिपत्तिरस्ति, न च मच्छब्द-वाच्यमात्मान्तरमत्राऽभ्युपगतं त्वया। यद्येवम्, प्रतिपन्न आत्मा तर्हि त्वयाऽप्येतदात्मशब्दाभिधेयः, मच्छब्दवाच्ये तत्र विवादात्। प्रतिपन्ने च विवादः सापवादः, स्ववचनविरोधबाधितत्वात्। अथ मम शरीरमि-त्यादिषु शरीरव्यतिरिक्तमालम्बनं ममेति ज्ञानस्याभ्युपगच्छतो ममा-त्मेत्यत्राप्यात्मव्यतिरिक्तमालम्बनं प्रसज्यत इत्यनिष्टापादनार्थत्वाददो-षोऽयमिति चेत्। तदचतुरस्रम्, अप्रतिभासनाद्; न हि ममायमात्मेति प्रत्यये शरीरादिवद् मत्प्रत्ययविषयादन्य आत्मा प्रतिभाति, किन्त्वह-मित्यात्मानं प्रत्यक्षतः प्रतिपद्यात्मान्तरव्यवच्छेदेन परप्रतीत्यर्थं ममा-त्मेति निर्दिशति, ममात्मा अहमेवेत्यर्थः। यदा पुनः शरीरमात्मशब्देन निर्देष्टुमिच्छति, तदा ममात्मेति भेदाभिधानमेवेदम्, शरीरस्यात्मोप-कारकत्वेनात्मत्वेनोपचारात्, अत्यन्तोपकारके भृत्येऽहमेवायमिति-वत्। किञ्च, ममात्मेति मत्प्रत्ययविषयाद् भेदेनात्मज्ञानं बाध्यमान-त्वाद् भ्रान्तं भवतु, शरीरभेदज्ञानं तु कस्माद् भ्रान्तम?; न ह्येकत्र केशादिज्ञानस्य भ्रान्तत्वे सर्वत्र भ्रान्तत्वं युक्तम्, भ्रान्ताऽभ्रान्तविशे-षाभावप्रसङ्गात्। ततः प्रत्यक्षादात्मा सिद्धिसौधमध्यमध्यासामास। नन्वात्मनः किं रूपं यत् प्रत्यक्षेण साक्षात्क्रियते?। यद्येवम्, सुखा-

देरपि किं रूपं यद् मानसप्रत्यक्षसमधिगम्यमिष्यते ?। नन्वानन्दादि-स्वभावं प्रसिद्धमेव रूपं सुखादेः, तर्हि तदाधारत्वमात्मनोऽपि रूप-मवगच्छतु भवान्।

"सुखादि चेत्यमानं हि स्वतन्त्रं नाऽनुभूयते ।
मतुबर्थानुवेधात् तु सिद्धं ग्रहणमात्मनः ॥ १ ॥
इदं सुखमिति ज्ञानं दृश्यते न घटादिवत् ।
अहं सुखीति तु ज्ञप्तिरात्मनोऽपि प्रकाशिका" ॥ २ ।

अनुमानतोऽप्यात्मा प्रसिध्यत्येव, तथाहि-चैतन्यं तन्वादिविल-क्षणाश्रयाश्रितम्, तत्र बाधकोपपत्तौ सत्यां कार्यत्वान्यथानुपपत्तेः । न तावदयं हेतुर्विशेष्यासिद्धः, कटकुटपटज्ञानादिविचित्रपरिणामपरम्परा-याः कादाचित्कत्वेन पटादिवत् तत्र कार्यत्वप्रसिद्धेः । नापि विशेषणा-सिद्धः, न शरीरेन्द्रियविषयाश्चैतन्यधर्माणः, रूपादिमत्त्वाद्, भौतिकत्वाद् वा घटवत्; इत्यनेन तत्र तस्य बाधनात् । नाप्ययं व्यभिचारी विरुद्धो वा, तन्वादिलक्षणाश्रयाश्रितात्[1] विपक्षात् तन्वादिवर्त्तिनो रूपादेः शरी-रत्वसामान्याद् वा सविशेषणकार्यत्वहेतोरत्यन्तं व्यावृत्तत्वात्। इत्यनु-मानतोऽप्यात्मा प्रासिध्यत्। "उपयोगलक्षणो जीवः" इत्यागमप्रदीपो-ऽप्यात्मानमुद्द्योतयति । अनुमानागमयोश्च प्रामाण्यं प्रागेव प्रसा-धितमित्यात्मप्रसिद्धिः ॥ बौद्धास्तु बुद्धिक्षणपरम्परामात्रमेवात्मानमा-म्नासिषुः, न पुनर्मौक्तिककणनिकरनिरन्तरानुस्यूतैकसूत्रवत् तदन्व-यिनमेकम् । ते लोकायतलुण्टाकेभ्योऽपि पापीयांसः, तद्भावेऽपि तेषां स्मरणप्रत्यभिज्ञानाद्यघटनात्; तथाहि-पूर्वबुद्ध्याऽनुभूतेऽर्थे नोत्तरबुद्धी-नां स्मृतिः संभवति, ततोऽन्यत्वात्, सन्तानान्तरबुद्धिवत् । न ह्यन्यदृष्टो-ऽर्थोऽन्येन स्मर्यते, अन्यथैकेन दृष्टोऽर्थः सर्वैः स्मर्येत । स्मरणाभावे च कौतस्कुती प्रत्यभिज्ञाप्रसूतिः ?, तस्याः स्मरणानुभवोभयसंभवत्वात्; पदार्थप्रेक्षणप्रबुद्धप्राक्तनसंस्कारस्य हि प्रमातुः स एवायमित्याकारेणेय-मुत्पद्यते । अथ स्यादयं दोषो यद्यविशेषेणाऽन्यदृष्टमन्यः स्मरतीत्युच्यते,

---

१ श्रितत्वाद् इति पाठान्तरम्, तदपि विपक्षत्वस्यैवावस्थापने हेतुत्वेन सुयोजम् ।

किन्त्वन्यत्वेऽपि कार्यकारणभावादेव स्मृतिः, भिन्नसंतानबुद्धीनां तु कार्यकारणभावो नास्ति, तेन सन्तानान्तराणां स्मृतिर्न भवति; न चैकसान्तानिकीनामपि बुद्धीनां कार्यकारणभावो नास्ति, येन पूर्वबुद्ध्यनुभूतेऽर्थे तदुत्तरबुद्धीनां स्मृतिर्न स्यात् । तदप्यनवदातम्, एवमपि नानात्वस्य तदवस्थत्वात् । अन्यत्वं हि स्मृत्यसंभवे साधनमुक्तम्, तच्च कार्यकारणभावाभिधानेऽपि नापगतम्, न हि कार्यकारणभावाभिधाने तस्यासिद्धत्वादीनामन्यतमो दोषः प्रतिपद्यते । नापि स्वपक्षसिद्धिरनेन क्रियते, न हि कार्यकारणभावात् स्मृतिरित्यत्रोभयप्रसिद्धोऽस्ति दृष्टान्तः । अथ—

" यस्मिन्नेव हि संतान आहिता कर्मवासना ।
फलं तत्रैव संधत्ते कर्पासे रक्तता यथा " ॥ १ ॥

इति कर्पासरक्तताहष्टान्तोऽस्तीति चेत् । तदसाधीयः, साधनदूषणासंभवात् । अन्वयाद्यसम्भवान्न साधनम्—न हि कार्यकारणभावो यत्र तत्र स्मृतिः कर्पासे रक्ततावदित्यन्वयः संभवति, नापि यत्र न स्मृतिस्तत्र न कार्यकारणभाव इति व्यतिरेकोऽस्ति । असिद्धत्वाद्यनुद्भावनाच्च न दूषणम्, न हि ततोऽन्यत्वादित्यस्य हेतोः कर्पासे रक्ततावदित्यनेन कश्चिद्दोषः प्रतिपाद्यते । किञ्च, यद्यन्यत्वेऽपि कार्यकारणभावेन स्मृतेरुत्पत्तिरिष्यते, तदा शिष्याचार्यादिबुद्धीनामपि कार्यकारणभावसद्भावेन स्मृत्यादि स्यात् । अथ नायं प्रसङ्गः, एकसंतानत्वे सतीति विशेषणादिति चेत् । तदयुक्तम्, भेदाभेदपक्षाभ्यां तस्योपक्षीणत्वात् । क्षणपरम्परातस्तस्याऽभेदे हि क्षणपरम्परैव सा, तथा च सन्तान इति न किञ्चिदतिरिक्तमुक्तम् । भेदे तु पारमार्थिकोऽपारमार्थिको वाऽसौ स्यात् । अपारमार्थिकत्वे त्वस्य तदेव दूषणम् । पारमार्थिकत्वे स्थिरो वा स्यात्, क्षणिको वा । क्षणिकत्वे सन्तानिनिर्विशेष एवायमिति किमनेन स्तेनभीतस्य स्तेनान्तरशरणस्वीकरणकारिणा ? ।

"स्थिरमथ सन्तानमभ्युपेयाः प्रथयन्तं परमार्थसत्स्वरूपम् ।
अमृतं पिब पूतयाऽनयोक्त्या स्थिरवपुषः परलोकिनः प्रसिद्धेः"॥१॥

उपादानोपादेयभावप्रबन्धेन प्रवर्त्तमानः कार्यकारणभाव एव सन्तान इति चेत्। तदवद्यम्, अविष्वग्भावादिसंबन्धविशेषाभावे कारणत्वमात्राविशेषादुपादानेतरविभागानुपपत्तेः। सन्तानजनकं यत् तदुपादानमिति चेत्। न, इतरेतराश्रयत्वप्रसङ्गात्—सन्तानजनकत्वेनोपादानकारणत्वम्, उपादानकारणजन्यत्वेन च सन्तानत्वमिति। लोके तु समानजातीयानां कार्यकारणभावे संतानव्यवहारः, तद्यथा—ब्राह्मणसन्तान इति, तत्प्रसिद्ध्या चास्माभिरपि शब्दप्रदीपादिषु सन्तानव्यवहारः क्रियते, तथापि यद्येवमभिप्रेतः सन्तानस्तदा कथं न शिष्याचार्यबुद्धीनामेकसन्तानत्वम्? । न ह्यासां समानजातीयत्वं कार्यकारणभावो वा नास्ति, ततः शिष्यस्य चिरव्यवहिता अपि बुद्धयः पारम्पर्येण कारणमिति तदनुभूतेऽप्यर्थे यथा स्मृतिर्भवति तथोपाध्यायबुद्धयोऽपि जन्मप्रभृत्युत्पन्नाः पारम्पर्येण कारणमिति तदनुभूतेऽप्यर्थे स्मृतिर्भवेत्। किञ्च, धूमशब्दादीनामुपादानकारणं विनैवोत्पत्तिस्तव स्याद्, न हि तेषामप्यनादिप्रबन्धेन समानजातीयं कारणमस्तीति शक्यते वक्तुम्, तथा च ज्ञानस्यापि गर्भादावनुपादानैवोत्पत्तिः स्यादिति परलोकाभावः। अथ धूमशब्दादीनां विजातीयमप्युपादानमिष्यते, एवं तर्हि ज्ञानस्याप्युपादानं गर्भशरीरमेवास्तु न जन्मान्तरज्ञानं कल्पनीयम्, यथादर्शनं ह्युपादानमिष्टम्, अन्यथा धूमशब्दादीनामप्यनादिः सन्तानः कल्पनीयः स्यादिति संतानाघटनाद् न परेषां स्मृत्यादिव्यवस्था, नापि परलोकः कोऽपि प्रसिद्धिपद्धतिं दधाति, परलोकिनः कस्यचिदसंभवात्। सत्यपि वा परलोके कथमकृताभ्यागममकृतप्रणाशौ पराक्रियेते? येन हि ज्ञानेन चैत्यवन्दनादिकर्म कृतम्, तस्य विनाशाद् न तत्फलोपभोगः; यस्य च फलोपभोगः, तेन न तत्कर्म कृतमिति। अथ नायं दोषः, कार्यकारणभावस्य नियामकत्वात्; अनादिप्रबन्धप्रवृत्तो हि ज्ञानानां हेतुफलभावप्रवाहः। स च सन्तान इत्युच्यते, तद्वशात् सर्वो व्यवहारः संगच्छते; नित्यस्त्वात्माऽभ्युपगम्यमानो यदि सुखादिजन्मना विकृतिमनुभवति तदनित्यः [illegible]

दुक्तः स्यात्, निर्विकारकत्वे तु सताऽसता वा सुखदुःखादिना कर्मफलेन कस्तस्य विशेषः ?, इति कर्मवैफल्यमेव । तदुक्तम्—

"वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम् ? ।
चर्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्समः" ॥ १ ॥ इति

तस्मात् त्यज्यतामेष मूर्धाभिषिक्तः प्रथमो मोह आत्मग्रहो ....., तन्निवृत्तावात्मीयग्रहोऽपि विरंस्यति–अहमेव न, किं मम ? इति । तदिदमहंकारममकारग्रन्थिप्रहाणेन नैरात्म्यदर्शनमेव निर्वाणद्वारम्, अन्यथा कौतस्कुती निर्वाणवार्ताऽपि ? । तदपि वार्तम्, हेतुफलभावप्रवाहस्वभावस्य सन्तानस्यानन्तरमेव नियामकत्वेन निरस्तत्वात् । यत् पुनः सुखादिविकाराभ्युपगमे चर्मादिवदात्मनोऽनित्यत्वं प्रसञ्जितम्, तदिष्टमेव, कथञ्चिदनित्यत्वेनाऽऽत्मनः स्याद्वादिभिः स्वीकाराद्; नित्यत्वस्य कथञ्चिदेवाभ्युपगमात् । यत्तु नित्यत्वेऽस्याऽऽत्मीयग्रहसद्भावेन मुक्त्यनवाप्तिदूषणमभाणि, तदप्यनवदातम्, विदितपर्यन्तविरससंसारस्वरूपाणां परिगतपारमार्थिकैकान्तिकाऽऽत्यन्तिकानन्दसन्दोहस्वभावापवर्गोपनिषदां च महात्मनां शरीरेऽपि किंपाकपाकोपलिप्तपायस इव निर्ममत्वदर्शनात् । नैरात्म्यदर्शने पुनरात्मैव तावन्नास्ति, कः प्रेत्यसुखीभवनार्थं यतिष्यते ?; ज्ञानक्षणोऽपि संसारी कथमपरज्ञानक्षणसुखीभवनाय घटिष्यते ?; न हि दुःखी देवदत्तो यज्ञदत्तसुखाय चेष्टमानो दृष्टः; एकक्षणस्य तु दुःखं स्वरसनाशित्वात् तेनैव सार्धं दध्वंसे । सन्तानस्तु न वास्तवः कश्चिदिति प्ररूपितमेव, वास्तवत्वे तस्य निष्प्रत्यूहाऽऽत्मसिद्धिरिति ॥ ५५ ॥

अथात्मनः परपरिकल्पितस्वरूपप्रतिषेधाय स्वाभिमतधर्मान् निर्णयन्ति—

**चैतन्यस्वरूपः परिणामी कर्त्ता साक्षाद्भोक्ता स्वदेहपरिमाणः प्रतिक्षेत्रं भिन्नः पौद्गलिकादृष्टवांश्चायम् ॥ ५६ ॥**

चैतन्यं साकारनिराकारोपयोगाख्यं स्वरूपं यस्याऽसौ चैतन्यस्वरूपः, परिणमनं प्रतिसमयमपरापरपर्यायेषु गमनं परिणामः स नित्यमस्यास्तीति परिणामी, करोत्यदृष्टादिकमिति कर्त्ता, साक्षादनुपचरितवृत्त्या भुङ्क्ते सुखादिकमिति साक्षाद्भोक्ता, स्वदेहपरिमाणः स्वोपात्तवपुर्व्यापकः, प्रतिक्षेत्रं प्रतिशरीरं भिन्नः पृथक्, पौद्गलिकादृष्टवान् पुद्गलघटितकर्मपरतन्त्रः, अयमित्यनन्तरं प्रमातृत्वेन निरूपित आत्मेति । अत्र चैतन्यस्वरूपत्वपरिणामित्वविशेषणाभ्यां जडस्वरूपः कूटस्थनित्यो नैयायिकादिसंमतः प्रमाता व्यवच्छिद्यते । यतो येषामात्माऽनुपयोगस्वभावस्तावत्, तेषां नासौ पदार्थपरिच्छेदं विदध्याद्, अचेतनत्वात्; आकाशवत् । अथ नोपयोगस्वभावत्वं चेतनत्वम्, किन्तु चैतन्यसमवायः; स चात्मनोऽस्तीत्यसिद्धमचेतनत्वमिति चेत् । तदनुचितम्, इत्थमाकाशादेरपि चेतनत्वापत्तेः, चैतन्यसमवायो हि विहायःप्रमुखेऽपि समानः; समवायस्य स्वयमविशिष्टस्यैकस्य प्रतिनियमहेत्वभावादाऽऽत्मन्येव ज्ञानं समवेतं नाकाशादिष्विति विशेषाव्यवस्थितेः । ननु यथेह कुण्डे दधीति प्रत्ययाद् न तत्कुण्डादन्यत्र तद्दधिसंयोगः शक्यसंपादनः, तथेह मयि ज्ञानमितीहेदंप्रत्ययाद् नात्मनोऽन्यत्र गगनादिषु ज्ञानसमवाय इति चेत् । तदयौक्तिकम् । यतः खादयोऽपि ज्ञानमस्मास्विति प्रतियन्तु, स्वयमचेतनत्वाद्, आत्मवत्; आत्मानो वा मैवं प्रतिगुः, तत एव, खादिवत्; इति जडात्मवादिमते सन्नपि ज्ञानमिहेतिप्रत्ययः प्रत्यात्मवेद्यो न ज्ञानस्याऽऽत्मनि समवायं नियमयति, विशेषाभावात् । नन्वेवमिह पृथिव्यादिषु रूपादय इति प्रत्ययोऽपि न रूपादीनां पृथिव्यादिषु समवायं साधयेत्, यथा खादिषु; तत्र वा स तं साधयेत्, पृथिव्यादिष्विव; इति न कचित् प्रत्ययविशेषात् कस्यचिद् व्यवस्थेति चेत् । सत्यम्, अयमपरोऽस्य दोषोऽस्तु, पृथिव्यादीनां रूपाद्यनात्मकत्वे खादिभ्यो विशिष्टतया व्यवस्थापयितुमशक्तेः । स्यान्मतम्, आत्मानो ज्ञानमस्मास्विति प्रतियन्ति; आत्मत्वात्, ये तु न तथा ते नाऽऽत्मानः, यथा खादयः, आत्मानश्चैतेऽहंप्रत्ययग्राह्याः, तस्मात्तथा; इत्यात्मत्वमेव खादिभ्यो विशेष-

मात्मनां साधयति, पृथिवीत्वादिवत्, पृथिव्यादीनां पृथिवीत्वादियोगाद्धि पृथिव्यादयः, तद्वदात्मत्वयोगादात्मान इति। तदयुक्तम्, आत्मत्वादिजातीनामपि जातिमदनात्मकत्वे तत्समवायनियमासिद्धेः । प्रत्ययविशेषात् तत्सिद्धिरिति चेत्, स एव विचारयितुमारब्धः; परस्परमत्यन्तभेदाविशेषेऽपि जातितद्वताम्, आत्मत्वजातिरात्मनि प्रत्ययविशेषमुपजनयति, न पृथिव्यादिषु; पृथिवीत्वादिजातयश्च तत्रैव प्रत्ययमुत्पादयन्ति, नात्मनि; इति कोऽत्र नियमहेतुः?। समवाय इति चेत्, सोऽयमन्योन्यसंश्रयः—सति प्रत्ययविशेषे जातिविशेषस्य जातिमति समवायः, सति च समवाये प्रत्ययविशेष इति । प्रत्यासत्तिविशेषादन्यत एव तत्प्रत्ययविशेष इति चेत्। स कोऽन्योऽन्यत्र कथञ्चित्तादात्म्यपरिणामात्?, इति स एव प्रत्ययविशेषहेतुरेषितव्यस्तदभावे तदघटनात्, जातिविशेषस्य क्वचिदेव समवायासिद्धेरात्मादिविभागानुपपत्तेरात्मन्येव ज्ञानं समवेतमिहेदमिति प्रत्ययं कुरुते, न पुनराकाशादिषु; इति प्रतिपत्तुमशक्तेर्न चैतन्ययोगादात्मनश्चेतनत्वं सिद्ध्येत्; अथ किमपरेण ?, प्रतीयते तावच्चेतनासमवायादात्मा चेतन इति चेत्। तदयुक्तम्। यतः प्रतीतिश्चेत् प्रमाणीक्रियते, तर्हि निष्प्रतिद्वन्द्वमुपयोगात्मक एवात्मा प्रसिद्ध्यति । न हि जातुचित् स्वयमचेतनोऽहं चेतनायोगाच्चेतनः, अचेतने वा मयि चेतनायाः समवाय इति प्रतीतिरस्ति; ज्ञाताऽहमिति समानाधिकरणतया प्रतीतेः। भेदे तथाप्रतीतिरिति चेत्। न, कथञ्चित्तादात्म्याभावे तददर्शनात्। यष्टिः पुरुष इत्यादिप्रतीतिस्तु भेदे सत्युपचाराद् दृष्टा, न पुनस्तात्त्विकी। तथा चात्मनि ज्ञाताऽहमिति प्रतीतिः कथञ्चिच्चेतनात्मतां गमयति, तामन्तरेणाऽनुपपद्यमानत्वात्, कलशादिवत्; न हि कलशादिरचेतनात्मको ज्ञाताऽहमिति प्रत्येति । चैतन्ययोगाभावादसौ न तथा प्रत्येतीति चेत्। न, अचेतनस्यापि चैतन्ययोगाच्चेतनोऽहमिति प्रतिपत्तेरनन्तरमेव निरस्तत्वात्, इत्यचेतनत्वं सिद्धमात्मनो जडस्यार्थपरिच्छेदं पराकरोति; तं पुनरिच्छता चैतन्यस्वरूपताऽस्य स्वीकरणीया। ननु ज्ञानवानहमिति प्रत्ययादात्मज्ञानयोर्भेदः, अन्यथा धनवानिति प्र-

त्ययादपि धनतद्वतोर्भेदाभावानुषङ्गादिति कश्चित्। तदप्यसत्। यतो ज्ञानवानहमिति नात्मा प्रत्येति, जडत्वैकान्तरूपत्वाद्, घटवत्। सर्वथा जडश्च स्यादात्मा, ज्ञानवानहमिति प्रत्ययश्चास्य स्याद्, विरोधाभावात्, इति मा निर्णैषीः; तस्य तथोत्पत्त्यसम्भवात्; ज्ञानवानहमिति हि प्रत्ययो नाऽगृहीते ज्ञानाख्ये विशेषणे विशेष्ये चात्मनि जातूत्पद्यते, स्वमतविरोधात् "नागृहीतविशेषणा विशेष्ये बुद्धिः" इति वचनात्। गृहीतयोस्तयोरुत्पद्यत इति चेत्, कुतस्तद्गृहीतिः?। न तावत् स्वतः, स्वसंवेदनानभ्युपगमात्, स्वसंविदिते ह्यात्मनि ज्ञाने च स्वतः सा युज्यते, नान्यथा; सन्तानान्तरवत्। परतश्चेत्, तदपि ज्ञानान्तरं विशेष्यं नागृहीते ज्ञानत्वविशेषणे ग्रहीतुं शक्यमिति ज्ञानान्तरात् तद्ग्रहणेन भाव्यमित्यनवस्थानात् कुतः प्रकृतप्रत्ययः?। तदेवं नात्मनो जडस्वरूपता संगच्छते। नापि कूटस्थनित्यता, यतो यथाविधः पूर्वदशायामात्मा, तथाविध एव चेज्ज्ञानोत्पत्तिसमयेऽपि भवेत्, तदा प्रागिव कथमेष पदार्थपरिच्छेदकः स्यात्? प्रतिनियतस्वरूपाप्रच्युतिरूपत्वात् कौटस्थ्यस्य; पदार्थपरिच्छेदे तु प्रागप्रमातुः प्रमातृरूपतया परिणामात् कुतः कौटस्थ्यमिति?॥ कर्त्ता साक्षाद्भोक्तेतिविशेषणयुगलकेन कापिलमतं तिरस्क्रियते, तथाहि–कापिलः कर्तृत्वं प्रकृतेः प्रतिजानीते न पुरुषस्य, "अकर्त्ता निर्गुणो भोक्ता" इति वचनात्। तदयुक्तम्। यतो यद्ययमकर्त्ता स्यात्, तदानीमनुभविताऽपि न भवेत्। द्रष्टुः कर्तृत्वे मुक्तस्यापि कर्तृत्वप्रसक्तिरिति चेत्। मुक्तः किमकर्तेष्टः?। विषयसुखादेरकर्त्तैवेति चेत्, कुतः स तथा?। तत्कारणकर्मकर्तृत्वाभावादिति चेत्, तर्हि संसारी विषयसुखादिकारणकर्मविशेषस्य कर्तृत्वाद् विषयसुखादेः कर्ता, स एव चाऽनुभविता किं न भवेत्?। संसार्यवस्थायामात्मा विषयसुखादितत्कारणकर्मणां न कर्ता, चेतनत्वाद्, मुक्तावस्थावत्; इत्येतदपि न सुन्दरम्, स्वेष्टविघातकारित्वात्। संसार्यवस्थायामात्मा न सुखादेर्भोक्ता, चेतनत्वाद्, मुक्तावस्थावत्; इति स्वेष्टस्यात्मनो भोक्तृत्वस्य विघातात्। प्रतीतिविरुद्धमिष्टविघातसाधनमिदमिति चेत्, कर्तृत्वाभा-

त्वसाधनमपि किं न तथा ? पुंसः श्रोताऽऽघ्राताऽहमिति स्वकर्तृत्वप्रतीतेः। अथ श्रोताऽहमित्यादिप्रतीतिरहङ्कारास्पदम्, अहङ्कारस्य च प्रधानमेव कर्तृतया प्रतीयत इति चेत्, तत एवानुभवितृ प्रधानमस्तु। न हि तस्याहङ्कारास्पदत्वं न प्रतिभाति, शब्दादेरनुभविताऽहमिति प्रतीतेः सकलजनसाक्षिकत्वात्। भ्रान्तमनुभवितुरहङ्कारास्पदत्वमिति चेत्, कर्तुः कथं न भ्रान्तम्?। तस्याहङ्कारास्पदत्वादिति चेत्, तत एवाऽनुभवितुस्तदभ्रान्तमस्तु। तस्यौपाधिकत्वादहङ्कारास्पदत्वं भ्रान्तमेवेति चेत्, कुतस्तदौपाधिकत्वसिद्धिः?। अथ पुरुषस्वभावत्वाभावादहङ्कारस्य तदास्पदत्वं पुरुषस्वभावस्यानुभवितृत्वस्यौपाधिकमिति चेत्। स्यादेवम्, यदि पुरुषस्वभावोऽहङ्कारो न स्यात्। मुक्तस्याहङ्काराभावादपुरुषस्वभाव एवाहङ्कारः; स्वभावो हि न जातुचित् तद्वन्तं त्यजति, तस्य निःस्वभावत्वप्रसङ्गादिति चेत्। न, स्वभावस्य द्विविधत्वात् सामान्यविशेषपर्यायभेदात्, तत्र सामान्यपर्यायः शाश्वतिकस्वभावः, कादाचित्को विशेषपर्याय इति न कादाचित्कत्वात् पुंस्यहङ्कारादेरतत्स्वभावता, ततो न तदास्पदत्वमनुभवितृत्वस्यौपाधिकम्, येनाभ्रान्तं न भवेत्। ततः सिद्धमात्माऽनुभवितेव कर्ता; अकर्तुर्भोक्तृत्वानुपपत्तेश्च। ननु भोक्तृत्वमप्युपचरितमेवास्य, प्रकृतिविकारभूतायां हि दर्पणाकारायां बुद्धौ संक्रान्तानां सुखदुःखादीनां पुरुषः स्वात्मनि प्रतिबिम्बोदयमात्रेण भोक्ता व्यपदिश्यते। तदशस्यम्, तस्य तथापरिणाममन्तरेण प्रतिबिम्बोदयस्याऽघटनात्, स्फटिकादावपि परिणामेनैव प्रतिबिम्बोदयसमर्थनात्; तथापरिणामाभ्युपगमे च कुतः कर्तृत्वमस्य न स्यात्?; इति सिद्धमस्य कर्तृत्वं साक्षाद्भोक्तृत्वं चेति॥ स्वदेहपरिमाण इत्यनेनाऽपि नैयायिकादिपरिकल्पितं सर्वगतत्वमात्मनो निषिध्यते, तथात्वे जीवतत्त्वप्रभेदानां व्यवस्थानाप्रसिद्धिप्रसङ्गात्। सर्वगतात्मन्येकत्रैव नानात्मकार्यपरिसमाप्तेः, सकृन्नानामनःसमायोगो हि नानात्मकार्यम्, तच्चैकत्रापि युज्यते, नभसि नानाघटादिसंयोगवत्। एतेन युगपन्नानाशरीरे-

न्द्रियसंयोगः प्रतिपादितः । युगपन्नानाशरीरेष्वात्मसमवायिनां सुख-दुःखादीनामनुपपत्तिः, विरोधादिति चेत् । न, युगपन्नानाभेर्यादिष्वा-काशसमवायिनां विततादिशब्दानामनुपपत्तिप्रसङ्गात्, तद्विरोधस्या-विशेषात् । तथाविधशब्दकारणभेदाद् न तदनुपपत्तिरिति चेत्, सुखा-दिकारणभेदात् तदनुपपत्तिरप्येकत्राऽऽत्मनि मा भूद्, विशेषाभावात् । विरुद्धधर्माध्यासादात्मनो नानात्वमिति चेत्, तत एवाकाशनानात्व-मस्तु । प्रदेशभेदोपचाराददोष इति चेत्, तत एवात्मन्यप्यदोषः । जननमरणकरणादिप्रतिनियमोऽपि सर्वगतात्मवादिनां नाऽऽत्मबहुत्वं साधयेत्, एकत्राऽपि तदुपपत्तेः, घटाकाशादिजननविनाशादिवत्; न हि घटाकाशस्योत्पत्तौ घटाकाशस्योत्पत्तिरेव, तदा विनाशस्यापि दर्श-नात्; नापि विनाशे विनाश एव, जननस्यापि तदोपलम्भात्; स्थितौ वा न स्थितिरेव विनाशोत्पादयोरपि तदा समीक्षणात् । सति बन्धे न मोक्षः, सति वा मोक्षे न बन्धः स्यात्, एकत्रात्मनि विरोधादिति चेत् । न, आकाशेऽपि सति घटबन्धे घटान्तरमोक्षाभावप्रसङ्गात्; सति वा घट-विश्लेषे घटान्तरविश्लेषप्रसङ्गात् । प्रदेशभेदोपचाराद् न तत्प्रसङ्ग इति चेत्, तत एवात्मनि न तत्प्रसङ्गः । नभसः प्रदेशभेदोपगमे जीवस्या-ऽप्येकस्य प्रदेशभेदोऽस्त्विति कुतो जीवतत्त्वप्रभेदव्यवस्था? यतो व्याप-कत्वं स्यात् । नन्वात्मनो व्यापकत्वाभावे दिग्देशान्तरवर्तिपरमाणु-भिर्युगपत्संयोगाभावादाद्यकर्माभावः, तदभावादन्त्यसंयोगस्य तन्निमि-त्तशरीरस्य, तेन तत्संबन्धस्य चाभावादनुपायसिद्धः सर्वदा सर्वेषां मोक्षः स्यात् । अस्तु वा यथा कथञ्चिच्छरीरोत्पत्तिः, तथापि सावयवं श-रीरं प्रत्यवयवमनुप्रविशन्नात्मा सावयवः स्यात्, तथा चास्य पटादिवत् कार्यत्वप्रसङ्गः । कार्यत्वे चासौ विजातीयैः सजातीयैर्वा कारणैरा-रभ्येत । न प्राच्यः प्रकारः, विजातीयानामनारम्भकत्वात् । न द्वि-तीयः, यतः सजातीयत्वं तेषामात्मत्वाभिसंबन्धादेव स्यात्, तथा चा-त्मभिरारभ्यते इत्यायातम्; एतच्चायुक्तम्, एकत्र शरीरेऽनेकात्मनामा-रम्भकाणामसम्भवात्, सम्भवे वा प्रतिसन्धानानुपपत्तिः; न ह्यन्येन

दृष्टमन्यः प्रतिसन्धातुमर्हति अतिप्रसङ्गात्, तदारभ्यत्वे चास्य घटवदव-यवक्रियातो विभागात् संयोगविनाशाद् विनाशः स्यात्। शरीरपरिणामत्वे चात्मनो मूर्त्तत्वानुषङ्गाच्छरीरेऽनुप्रवेशो न स्यात्, मूर्त्ते मूर्त्तस्यानुप्रवे-शविरोधात्; ततो निरात्मकमेवाखिलं शरीरमनुषज्यते। कथं वा तत्प-रिमाणत्वे तस्य बालशरीरपरिमाणस्य सतो युवशरीरपरिमाणस्वी-कारः स्यात्? तत्परिमाणपरित्यागात्, तदपरित्यागाद्वा। परित्यागाच्चेत्, तदा शरीरवत् तस्यानित्यत्वप्रसङ्गात् परलोकाद्यभावानुषङ्गः। अथापरि-त्यागात्, तन्न, पूर्वपरिमाणापरित्यागे शरीरवत् तस्योत्तरपरिमाणो-त्पत्त्यनुपपत्तेः। तथा—

"यदि वपुष्परिमाणपवित्रितं वदसि जैनमतानुग! पूरुषम्।
वद तदा कथमस्य विखण्डने भवति तस्य न खण्डनडम्बरम्?"॥१॥

अत्राभिदध्महे– यदभ्यधायि–नन्वात्मनो व्यापकत्वाभाव इत्यादि, तदसत्यम्, यद् येन संयुक्तं तदेव तं प्रत्युपसर्पतीति नियमासंभवात्; अयस्कान्तं प्रत्ययसस्तेनाऽसंयुक्तस्याऽप्याकर्षणोपलब्धेः। अथासंयुक्तस्या-ऽप्याकर्षणे तच्छरीरारम्भं प्रत्येकमुखीभूतानां त्रिभुवनोदरविवरवर्तिपर-माणूनामुपसर्पणप्रसङ्गाद् न जाने कियत्परिमाणं तच्छरीरं स्यादिति चेत्। संयुक्तस्याऽप्याकर्षणे कथं स एव दोषो न भवेत्? आत्मनो व्यापक-त्वेन सकलपरमाणूनां तेन संयोगात्। अथ तद्भावाविशेषेऽप्यदृष्टवशाद् विवक्षितशरीरोत्पादनानुगुणा नियता एव परमाणव उपसर्पन्ति; तदि-तरत्रापि तुल्यम्। यच्चान्यदुक्तम्–सावयवं शरीरं प्रत्यवयवमनुप्रविश-न्नात्मेत्यादि, तदप्युक्तिमात्रम्, सावयवत्वकार्यत्वयोः कथञ्चिदा-त्मन्यभ्युपगमात्। न चैवं घटादिवत् प्राक्प्रसिद्धसमानजातीयावयवार-भ्यत्वप्रसक्तिः; न खलु घटादावपि कार्ये प्राक्प्रसिद्धसमानजातीय-कपालसंयोगारभ्यत्वं दृष्टम्, कुम्भकारादिव्यापारान्विताद् मृत्पिण्डात् प्रथममेव पृथुबुध्नोदराद्याकारस्याऽस्योत्पत्तिप्रतीतेः। द्रव्यस्य हि पूर्वाकारपरित्यागेनोत्तराकारपरिणामः कार्यत्वम्, तच्च बहिरिवा-न्तरप्यनुभूयत एव। न च पटादौ स्वावयवसंयोगपूर्वककार्यत्वो-

पलम्भात् सर्वत्र तथाभावो युक्तः, काष्ठे लोहलेख्यत्वोपलम्भाद् वज्रेऽपि तथाभावप्रसङ्गात्; प्रमाणबाधनमुभयत्र तुल्यम् । न चोक्तलक्षणकार्यत्वाभ्युपगमेऽप्यात्मनोऽनित्यत्वानुषङ्गात् प्रतिसन्धानाभावोऽनुषज्यते, कथञ्चिदनित्यत्वे सत्येवाऽस्योपपद्यमानत्वात् । यच्चाऽवाचि–शरीरपरिमाणत्वे चात्मनो मूर्तत्वानुषङ्ग इत्यादि, तत्र किमिदं मूर्त्तत्वं नाम ? असर्वगतद्रव्यपरिमाणत्वं, रूपादिमत्त्वं वा । तत्र नाद्यः पक्षो दोषपोषाय, संमतत्वात् । द्वितीयपक्षस्त्वयुक्तः, व्याप्त्यभावात्; न हि यदसर्वगतं तन्नियमेन रूपादिमदित्यविनाभावोऽस्ति, मनसोऽसर्वगतत्वेऽपि तदसम्भवात् । अतो नात्मनः शरीरेऽनुप्रवेशानुपपत्तिर्यतो निरात्मकं तत् स्यात्; असर्वगतद्रव्यपरिमाणलक्षणमूर्तत्वस्य मनोवत् प्रवेशाप्रतिबन्धकत्वात्; रूपादिमत्त्वलक्षणमूर्त्तत्वोपेतस्यापि हि जलादेर्भस्मादावनुप्रवेशो न निषिध्यते, आत्मनस्तु तद्रहितस्यापि तत्रासौ प्रतिबध्यत इति महच्चित्रम् । यदप्यवादि–तत्परिमाणत्वे तस्य बालशरीरपरिमाणस्येत्यादि, तदप्ययुक्तम्, युवशरीरपरिमाणावस्थायामात्मनो बालशरीरपरिमाणपरित्यागे सर्वथा विनाशासम्भवात्, विफणावस्थोत्पादे सर्पवत्, इति कथं परलोकाभावोऽनुषज्यते?; पर्यायतस्तस्याऽनित्यत्वेऽपि द्रव्यतो नित्यत्वात्। यच्चाजल्पि–यदि वपुष्परिमाणपवित्रितमित्यादि, तदप्यपेशलम्, शरीरखण्डने कथञ्चित्तत्खण्डनस्येष्टत्वात्, शरीरसंबद्धात्मप्रदेशेभ्यो हि कतिपयात्मप्रदेशानां खण्डितशरीरप्रदेशेऽवस्थानमात्मनः खण्डनम्, तच्चात्र विद्यत एव; अन्यथा शरीरात् पृथग्भूतावयवस्य कम्पोपलब्धिर्न स्यात् । न च खण्डितावयवानुप्रविष्टस्यात्मप्रदेशस्य पृथगात्मत्वप्रसङ्गः, तत्रैवानुप्रवेशात् । न चैकत्र सन्तानेऽनेक आत्मा, अनेकार्थप्रतिभासिज्ञानानामेकप्रमात्राधारतया प्रतिभासाभावप्रसङ्गात्, शरीरान्तरव्यवस्थितानेकज्ञानावसेयार्थसंवित्तिवत् । कथं खण्डिताखण्डितावयवयोः संघट्टनं पश्चादिति चेत् ?, एकान्तेन च्छेदानभ्युपगमात्, पद्मनालतन्तुवदच्छेदस्यापि स्वीकारात्; तथाभूतादृष्टवशाच्च तत्सं-

घट्टनमविरुद्धमेवेति तनुपरिमाण एवाऽऽत्माऽङ्गीकर्तव्यो न व्यापकः । तथा चाऽऽत्मा व्यापको न भवति, चेतनत्वात्, यत्तु नैवं न तच्चेतनं यथा व्योम, चेतनश्चात्मा, तस्मादव्यापकः । अव्यापकत्वे चाऽस्य तत्रैवोपलभ्यमानगुणत्वेन सिद्धा शरीरपरिमाणता ॥ प्रतिक्षेत्रं विभिन्न इत्यनेन तु विशेषणेनाऽऽत्माऽद्वैतमपास्तम् । एतदपासनप्रकारश्च प्रागेव प्रोक्त इति न पुनरुच्यते ॥ पौद्गलिकादृष्टवानिति नास्तिकादिमतमत्यसितुम् । तथाहि–नास्तिकस्तावद् नाऽदृष्टमिष्टवान् । स प्रष्टव्यः–किमाश्रयस्य परलोकिनोऽभावात्, अप्रत्यक्षत्वाद्, विचाराक्षमत्वात्, साधकाभावाद् वाऽदृष्टाभावो भवेत्? । न तावत् प्रथमात्, परलोकिनः प्राक्प्रसाधितत्वात् । नाऽप्यप्रत्यक्षत्वात्, यतस्तवाऽप्रत्यक्षं तत्, सर्वप्रमातॄणां वा । प्रथमपक्षे त्वत्पितामहादेरप्यभावो भवेत्, चिरातीतत्वेन तस्य तवाऽप्रत्यक्षत्वात्; तदभावे भवतोऽप्यभावो भवेदित्यहो ! नवीना वादवैदग्धी । द्वितीयकल्पोऽप्यल्पीयान्, सर्वप्रमातृप्रत्यक्षमदृष्टनिष्टङ्कनिष्णातं न भवतीति वादिना प्रत्येतुमशक्तेः; प्रतिवादिना तु तदाऽऽकलनकुशलः केवली कक्षीकृत एव । विचाराक्षमत्वमप्यक्षमम्, कर्कशतर्कैस्तर्क्यमाणस्य तस्य घटनात् । ननु कथं घटते ? तथाहि–तदनिमित्तं सनिमित्तं वा भवेत् । न तावदनिमित्तम्, सदा सत्त्वासत्त्वयोः प्रसङ्गात् "नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्" । यदि पुनः सनिमित्तम्, तदाऽपि तन्निमित्तमदृष्टान्तरमेव, रागद्वेषादिकषायकालुष्यम्, हिंसादिक्रिया वा । प्रथमे पक्षेऽनवस्थाव्यवस्था । द्वितीये तु न कदापि कस्यापि कर्माभावो भवेत्, तद्धेतोरागद्वेषादिकषायकालुष्यस्य सर्वसंसारिणां भावात् । तृतीयपक्षोऽप्यसूपपादः, पापपुण्यहेतुत्वसंमतयोर्हिंसाऽर्हत्पूजादिक्रिययोर्व्यभिचारदर्शनात्–कृपणपशुपरम्पराप्राणप्रहाणकारिणां कपटघटनापटीयसां पितृमातृमित्रपुत्रादिद्रोहिणामपि केषांचिच्चपलचारुचामरश्वेतातपत्रपात्रपार्थिवश्रीदर्शनात्, जिनपतिपदपङ्कजपूजापरायणानां निखिलप्राणिपरम्पराऽपारकरुणाकूपाराणामपि केषांचिदनेकोपद्रवदारिद्र्यमुद्राक्रा-

न्तत्वाऽऽलोकनादिति ॥ अत्र ब्रूमः–पक्षत्रयमप्येतत् कक्षीक्रियत एव । प्राच्याऽदृष्टान्तरवशगो हि प्राणी रागद्वेषादिना प्राणव्यपरोपणादि कुर्वाणः कर्मणा बध्यते । न च प्रथमपक्षेऽनवस्था दौस्थ्याय, मूलक्षयकरत्वाभावाद् , बीजाङ्कुरादिसन्तानवत् तत्सन्तानस्याऽनादित्वेनेष्टत्वात् । द्वितीयेऽपि यदि कस्यापि कर्माभावो न भवेद् मा भूत्, सिद्धं तावददृष्टम् । मुक्तिवादे तदभावोऽपि प्रसाधयिष्यते । तृतीये तु या हिंसावतोऽपि समृद्धिः, अर्हत्पूजावतोऽपि दारिद्र्याऽऽप्तिः; सा क्रमेण प्रागुपात्तस्य पापानुबन्धिनः पुण्यस्य, पुण्यानुबन्धिनः पापस्य च फलम् । तत्क्रियोपात्तं तु कर्म जन्मान्तरे फलिष्यतीति नाऽत्र नियतकार्यकारणभावव्यभिचारः । साधकाभावादपि नाऽदृष्टाभावः, प्राक्प्रसाधितप्रामाण्ययोरागमाऽनुमानयोस्तत्प्रसाधकयोर्भावात् । तथा च "शुभः पुण्यस्य " " अशुभः पापस्य" इत्यागमः । अनुमानं तु–तुल्यसाधनानां कार्ये विशेषः सहेतुकः, कार्यत्वात् , कुम्भवत् ।

" दृष्टश्च साध्वीसुतयोर्यमयोस्तुल्यजन्मनोः ।
विशेषो वीर्यविज्ञानवैराग्यारोग्यसंपदाम् " ॥ १ ॥

न चायं विशेषो विशिष्टमदृष्टकारणमन्तरेण ।

यदूचुर्जिनभद्रगणिक्षमाश्रमणमिश्राः–

"जो तुल्लसाहणाणं फले विसेसो ण सो विणा हेउं ।
कज्जत्तणओ गोयम ! घडोव्व हेऊ य से कम्मं " ॥ १ ॥

अथ यथैकप्रदेशसंभवानामपि बदरीकण्टकानां कौटिल्यार्जवादिर्विशेषः, यथा वैकसरसीसंभूतानामपि पङ्कजानां नीलधवलपाटलपीतशतपत्रसहस्रपत्रादिर्भेदः; तथा शरीरिणामपि स्वभावादेवाऽयं विशेषो भविष्यति । तदशस्यम् , कण्टकपङ्कजादीनामपि प्राणित्वेन परेषां प्रसिद्धेस्तद्दृष्टान्तावष्टम्भस्य दुष्टत्वात्; आहारक्षतरोहदोहदादिना वनस्पतीनामपि प्राणित्वेन तैः प्रसाधनात् ।

---

१ यस्तुल्यसाधनानां फले विशेषो न स विना हेतुम् ।
कार्यत्वतः, गौतम ! घट इव हेतुश्च स कर्म ॥ १ ॥

अथ गगनपरिसरे मकरकरितुरङ्गकुरङ्गभृङ्गाराङ्गाराद्याकारानन्नेक-प्रकारान् बिभ्रत्यभ्राणि, न च तान्यपि चेतनानि वः संमतानि; तद्वत् तनुभाजोऽपि राजरङ्कादयः सन्त्विति चेत्। तदसत्, तेषामपि जगददृष्टवशादेव देवपदवीपरिसरे विचरतां विचित्राकारस्वीकारात् । कश्चायं स्वभावो यद्वशाज्जगद्वैचित्र्यमुच्यते ?। किं निर्हेतुकत्वम्, स्वात्महेतुकत्वम्, वस्तुधर्मः, वस्तुविशेषो वा। आद्ये पक्षे सदा सत्त्वस्य, असत्त्वस्य वा प्रसङ्गः । द्वितीये आत्माश्रयत्वं दोषः, अविद्यमानो हि भावात्मा कथं हेतुः स्यात् ?; विद्यमानोऽपि विद्यमानत्वादेव कथं स्वोत्पाद्यः स्यात् ? । वस्तुधर्मोऽपि दृश्यः कश्चित्, अदृश्यो वा। दृश्यस्तावदनुपलम्भबाधितः । अदृश्यस्तु कथं सत्त्वेन वक्तुं शक्यः ? । अनुमानात् तु तन्निर्णयेऽदृष्टानुमानमेव श्रेयः । वस्तुविशेषश्चेत् स्वभावो भूतातिरिक्तो भूतस्वरूपो वा । प्रथमे मूर्तोऽमूर्तो वा । मूर्तोऽपि दृश्योऽदृश्यो वा । दृश्यस्तावद् दृश्यानुपलम्भबाधितः । अदृश्यस्त्वदृष्टमेव स्वभावभाषया बभाषे । अमूर्तः पुनः परः परलोकिनः को नामाऽस्तु ?। न चादृष्टविघटितस्य तस्य परलोकस्वीकारः, इत्यतोऽप्यदृष्टं स्पष्टं निष्टङ्क्यते । भूतस्वरूपस्तु स्वभावो नरेन्द्रदरिद्रतादिवैसदृश्यभाजोर्यमलजातयोरुत्पादकस्तुल्य एव विलोक्यते, इति कौतस्कुतस्तयोर्विशेषः स्यात् ?। तद्दर्शनात् तत्राऽदृष्टभूतविशेषानुमानेन नामान्तरतिरोहितमदृष्टमेवानुमितिसिद्धं दृष्टम् ; इतोऽपि–बालशरीरं शरीरान्तरपूर्वकम्, इन्द्रियादिमत्त्वात्, तरुणशरीरवत् । न च प्राचीनभवातीततनुपूर्वकमेवेदम्, तस्य तद्भवावसान एव पटुपवनप्रेरितातितीव्रचिताज्वलनज्वालाकलापप्लुष्टतया भस्मसाद्भावादपान्तरालगतावभावेन तत्पूर्वकत्वानुपपत्तेः । न चाऽशरीरिणो नियतगर्भदेशस्थानप्राप्तिपूर्वकशरीरग्रहो युज्यते, नियामककारणाभावात् । स्वभावस्य तु नियामकत्वं प्रागेव व्यपास्तम् । ततो यच्छरीरपूर्वकं बालशरीरं तत्कर्ममयमिति । पौद्गलिकं चेदमदृष्टमेष्टव्यम्, आत्मनः पारतन्त्र्यनिमित्तत्वाद्, निगडादिवत् । क्रोधादिना

व्यभिचार इति चेत् । न, तस्याऽऽत्मपरिणामरूपस्य पारतन्त्र्य-स्वभावत्वात्; तन्निमित्तभूतस्य तु कर्मणः पौद्गलिकत्वात् । एवं सीधु-स्वादनोद्भवचित्तवैकल्यमपि पारतन्त्र्यमेव, तद्धेतुस्तु सीधु पौद्गलिकमे-वेति नैतेनाऽपि व्यभिचारः । ततो यद् यौगैरात्मविशेषगुणलक्षणम्, कापिलैः प्रकृतिविकारस्वरूपम्, सौगतैर्वासनास्वभावम्, ब्रह्मवादि-भिरविद्यास्वरूपं चाऽदृष्टमवादि; तदपास्तम् । विशेषतः पुनरमीषां नि-षेधो विस्तराय स्यादिति न कृतः ॥ ५६ ॥

अथात्मन एव विशेषणान्तरमाहुः—

**तस्योपात्तपुंस्त्रीशरीरस्य सम्यग्ज्ञानक्रियाभ्यां कृत्स्नकर्मक्षयस्वरूपा सिद्धिः ॥ ५७ ॥**

तस्याऽनन्तरनिरूपितरूपस्याऽऽत्मनः, उपात्तपुंस्त्रीशरीरस्य स्वी-कृतपुरुषयोषिद्वपुषः, एतेन स्त्रीनिर्वाणद्वेषिणः काष्ठाम्बरान् शिक्ष-यन्ति । सम्यग्ज्ञानं च यथावस्थितवस्तुतत्त्वावबोधः, क्रिया च तपश्चरणादिका, ताभ्याम् । ननु सम्यग्दर्शनमपि कृत्स्नकर्मक्ष-यकारणमेव । यदाहुः–"सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इति, तत् कथमिह नोपदिष्टम्? । उच्यते । सम्यग्ज्ञानोपादानेनैव तस्याक्षिप्तत्वात्, द्वयोरप्यनयोः सहचरत्वात् । सम्यग्ज्ञानस्य क्रि-यातः पृथगुपादानाद् या क्रिया सम्यग्ज्ञानपूर्विका सैव तत्कारणम्, न पुनर्मिथ्यात्वमलपटलावलुप्तविवेकविकलानां मिथ्याज्ञानपूर्विका क-न्दफलमूलशैवालकवलनादिका । कृत्स्नस्याऽष्टप्रकारस्यापि, न तु क-तिपयस्य, जीवन्मुक्तेरनभिधित्सितत्वात् । कर्मणो ज्ञानावरणादेरदृ-ष्टस्य, न तु बुद्ध्यादिगुणानामपि, नापि ज्ञानमात्रसंतानस्य । क्षयः सामस्त्येन प्रलयः स्वरूपं यस्याः सा तथा । एतेन नैयायिक-सौगतोपकल्पितमुक्तिप्रतिक्षेपः । एवंविधा सिद्धिर्मोक्षो भवति । इह केचिज्ज्ञानादेव मोक्षमास्थिषत, तथाह्येते ब्रुवते–सम्यग्ज्ञान-मेव फलसंपादनप्रत्यलम्, न क्रिया; अन्यथा मिथ्याज्ञानादपि

क्रियायां फलोत्पादप्रसङ्गात् । यदुक्तम्—

"विज्ञप्तिः फलदा पुंसां न क्रिया फलदा मता ।
मिथ्याज्ञानात् प्रवृत्तस्य फलाऽसंवाददर्शनात्" ॥ १ ॥

तथा—

"श्रियः प्रसूते विपदो रुणद्धि यशांसि दुग्धे मलिनं प्रमार्ष्टि ।
संस्कारशौचेन परं पुनीते शुद्धा हि बुद्धिः कुलकामधेनुः" ॥१॥

क्रियावादिनस्तु वदन्ति—क्रियैव फलहेतुर्न ज्ञानम्, भक्ष्यादिविज्ञानेऽपि क्रियामन्तरेण सौहित्यादिफलानुत्पादात् । यदवाचि—

"क्रियैव फलदा पुंसां न ज्ञानं फलदं मतम् ।
यतः स्त्रीभक्ष्यभोगज्ञो न ज्ञानात् सुखितो भवेत्" ॥ १ ॥

तथा—

"शास्त्राण्यधीत्याऽपि भवन्ति मूर्खा यस्तु क्रियावान् पुरुषः स विद्वान् ।
संचिन्त्यतामौषधमातुरं हि न ज्ञानमात्रेण करोत्यरोगम्" ॥ १ ॥

अत्र ब्रूमहे— यदुक्तम्—सम्यग्ज्ञानमेव फलसंपादनप्रत्यलमित्यादि, तत् 'स्त्रीभक्ष्यभोगज्ञो न ज्ञानात् सुखितो भवेत्' इत्यनेन क्रियावादिनैव व्यपास्तम्, इत्युपेक्षणीयमेव । ततः सम्यग्ज्ञानं सम्यक्क्रियासध्रीचीनमेव फलसिद्धिनिबन्धनमित्यभ्युपगन्तव्यम्; न तु ज्ञानैकान्तः कान्तः। क्रियैकान्तोऽपि भ्रान्त एव।'यतः स्त्रीभक्ष्यभोगज्ञो न ज्ञानात् सुखितो भवेत्' इति तु न युक्तम्। यतः सम्यग्ज्ञानकारणैकान्तवादिनामयमुपालम्भो न पुनरस्माकम्, सम्यग्ज्ञानक्रिययोरुभयोरपि परस्परापेक्षयोः कारणत्वस्वीकारात् । न च नितम्बिनीमोदकादिगोचरायां प्रवृत्तौ तद्विज्ञानं सर्वथा नास्त्येव, यतः क्रियाया एव तत्कारणता कल्प्येत । तद्गोचरविज्ञानसनाथैव तत्र प्रवृत्तिः प्रीतिपरम्परोत्पादनप्रत्यला; अन्यथोन्मत्तमूर्च्छितादेरपि प्रौढप्रेमपरायणप्रणयिनीनिबिडाश्लेषक्रियाऽपि तदुत्पादाय किं न स्यात्?। अथासौ क्रियैव तत्त्वतो न भवति, सैव हि क्रिया तात्त्विकी या स्वकीयकार्याऽव्यभिचारिणी; हन्त! तर्हि तदेव तात्त्विकं ज्ञानं यत् स्वकीयकार्याव्यभिचारीति कथं स्त्रीभक्ष्य-

भोगज्ञ इत्युपालम्भः शोभेत ?। ततः कार्यमर्जयन्ती यथा निश्चयनयेन क्रिया क्रियोच्यते, तथा ज्ञानमपि; इति कचिद् व्यभिचाराभावाद् द्वयमेवैतत् फलोत्पत्तिकारणमनुगुणमिति । अथ भवत्वेतत्कारणिका मुक्तिः, तथापि बुद्ध्यादीनां नवानामात्मविशेषगुणानां योऽत्यन्तमुच्छेदः, तद्रूपैव स्वीकर्तव्या; न पुनर्निःशेषकर्मक्षयलक्षणा । तथा चानुमानम्-नवानामात्मविशेषगुणानां सन्तानोऽत्यन्तमुच्छिद्यते, सन्तानत्वात्, यो यः सन्तानः स सोऽत्यन्तमुच्छिद्यते यथा प्रदीपसन्तानः, तथा चायम्, तस्मादत्यन्तमुच्छिद्यत इति । " न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति", "अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशतः" इत्यादयो वेदान्ता अपि तादृशीमेव मुक्तिमादिशन्ति । अपि च-

"यावदात्मगुणाः सर्वे नोच्छिन्ना वासनादयः ।
तावदात्यन्तिकी दुःखव्यावृत्तिर्न विकल्प्यते ॥ १ ॥
धर्माधर्मनिमित्तो हि संभवः सुखदुःखयोः ।
मूलभूतौ च तावेव स्तम्भौ संसारसद्मनः ॥ २ ॥
तदुच्छेदे च तत्कार्यशरीराद्यनुपप्लवात् ।
नात्मनः सुखदुःखे स्त इत्यसौ मुक्त उच्यते ॥ ३ ॥
इच्छाद्वेषप्रयत्नादि भोगायतनबन्धनम् ।
उच्छिन्नभोगायतनो नात्मा तैरपि युज्यते ॥ ४ ॥
तदेवं धिषणादीनां नवानामपि मूलतः ।
गुणानामात्मनो ध्वंसः सोऽपवर्गः प्रतिष्ठितः ॥ ५ ॥
ननु तस्यामवस्थायां कीदृगात्माऽवशिष्यते ? ।
स्वरूपैकप्रतिष्ठानः परित्यक्तोऽखिलैर्गुणैः ॥ ६ ॥
ऊर्मिषट्कातिगं रूपं तदस्याहुर्मनीषिणः ।
संसारबन्धनाधीनदुःखक्लेशाद्यदूषितम् " ॥ ७ ॥

ऊर्मयः कामक्रोधमदगर्वलोभदम्भाः ।

"प्राणस्य क्षुत्पिपासे द्वे मनसः शोकमूढते ।
जरामृत्यू शरीरस्य षडूर्मिरहितः शिवः" ॥ १ ॥

इति तु पुराणे ॥ अत्र ब्रूमः —यदवादि– सन्तानत्वादिति, तत्र किमिदं सन्तानत्वं नाम ? किमुपादानोपादेयभावप्रबन्धेन प्रवर्तमानत्वम्, कार्यकारणभावप्रबन्धेन प्रवृत्तिः, अपरापरपदार्थोत्पत्तिमात्रता वा । आद्यः पक्षः सावद्यः, आश्रयासिद्धिस्वरूपासिद्धतयोरापत्तेः, बुद्ध्यादिनवक्षणानामुपादानोपादेयभावरूपतया सन्तानस्य सौगतानामेव संमतत्वात्; आत्मनः समवायिनः, आत्ममनःसंयोगादसमवायिनः, अदृष्टादेर्निमित्ताच्च तैरात्मगुणोत्पादप्रतिपादनात् । एतेन द्वितीयपक्षोऽपि व्यपास्तः, बुद्ध्यादिक्षणानां कार्यकारणभावमात्रस्याऽपि तैरस्वीकारात्; प्रलयप्रलीनबुद्ध्यादेरप्यात्मनः पुनर्बुद्ध्याद्युत्पादाङ्गीकारात् । तृतीयपक्षेऽपि व्यभिचारः, अपरापरेषामुत्पादुकानां पटकटकपाटादीनां सन्तानत्वेऽप्यत्यन्तमनुच्छिद्यमानत्वात् । अथैकाश्रयाऽपरापरोत्पत्तिः सन्तानः, ततो नैष दोषः; तर्हि तादृशं सन्तानत्वं प्रदीपे नास्तीति साधनवैकल्यं दृष्टान्तस्य; परमाणुपाकजरूपादिभिश्च व्यभिचारी हेतुः, तथाविधसन्तानत्वस्य तत्र सद्भावेऽप्यत्यन्तोच्छेदाभावात् । अपि च, संतानत्वमपि भविष्यत्यत्यन्तानुच्छेदश्च, विपर्यये बाधकप्रमाणाभावात्, इति सन्दिग्धविपक्षव्यावृत्तिकत्वादप्यनैकान्तिकोऽयम् । विरुद्धश्च, शब्दबुद्धिविद्युत्प्रदीपादिष्वत्यन्तानुच्छेदवत्स्वेव सन्तानत्वस्य व्यवस्थानात्; शब्दबुद्धिविद्युत्प्रदीपादयो हि पर्याया द्रव्यरूपतया स्थास्नव एव, तद्द्रव्याविष्वग्भूतं पर्यायान्तरमुत्पादयन्त एव प्रध्वंसन्ते । न पुनरमीषामत्यन्तमुच्छेदः सूपपादः, उत्पादव्ययध्रौव्याणां परस्परनिरपेक्षाणां खरविषाणप्रख्यत्वात् । तथाहि– नास्ति कचिदत्यन्तमुच्छेदः, स्थित्युत्पादरहितत्वात्, खरविषाणवत्; इति न प्रस्तुतानुमानाद् बुद्ध्यादिगुणोच्छेदरूपा सिद्धिः सिध्यति । नापि न ह वै सशरीरस्येत्यादिगदितागमात्, शुभाशुभादृष्टपरिपाकप्रभवेन भवसम्भविनी हि प्रियाप्रिये परस्परानुषक्ते अपेक्ष्याऽयं व्यवस्थितः; सकलादृष्टक्षयकारणकं पुनरैकान्तिकात्यन्तिकरूपं केवलमेव प्रियं निःश्रेयसदशायामिष्यते, तत् कुतः प्रतिषिध्यते ? । आगमार्थश्चायमित्थमेव सम-

र्थनीयः, यत एतदर्थानुपातिन्येव स्मृतिरपि विलोक्यते–

"सुखमात्यन्तिकं यत्र बुद्धिग्राह्यमतीन्द्रियम् ।
तं वै मोक्षं विजानीयाद् दुष्प्रापमकृतात्मभिः" ॥ १ ॥

न चायं सुखशब्दो दुःखाभावमात्रे वर्तनीयः, मुख्यसुखवाच्यतायां बाधकाभावात् । न च भवदुदीरितो मोक्षः पुंसामुपादेयतया संमतः, को हि नाम शिलाशकलकल्पमपगतसकलसुखसंवदेनस्पर्शमात्मानमुपपादयितुं यतेत ? । सोपाधिकसावधिकपरिमितानन्दनिष्यन्दात् स्वर्गादप्यधिकमनवधिकनिरतिशयनैसर्गिकाऽऽनन्दसुन्दरमपरिम्लानतत्संवेदनसामर्थ्यं चतुर्थं पुरुषार्थमाचक्षते विचक्षणाः । यदि तु जडः पाषाणनिर्विशेष एव तस्यामवस्थायामात्मा भवेत्, तत् कृतमपवर्गेण, संसार एव वरमस्तु; यत्र तावदन्तराऽन्तराऽपि दुःखकलुषितमपि सुखमुपभुज्यते । चिन्त्यतां तावदिदम्–किमल्पसुखानुभवो भव्यः, उत सर्वसुखोच्छेद एव ?। अथास्ति तथाभूते मोक्षे लाभातिरेकः प्रेक्षाणाम् । ते ह्येवं विवेचयन्ति–दुःखसंस्पर्शशून्यशाश्वतिकसुखसंभोगासंभवाद् दुःखस्य चाऽवश्यहातव्यत्वाद् विवेकहानस्य चाशक्यत्वाद् विषमधुनी इवैकत्राऽमत्रे पतिते उभे अपि सुखदुःखे त्यज्येयातामिति; अतश्च संसाराद् मोक्षः श्रेयान् यत्राऽयमियानतिदुःसहो दुःखप्रबन्धोऽवलुप्यते; वरमियती कादाचित्कसुखकणिका त्यक्ता, न तु तस्याः कृते दुःखभारइयान् व्यूढ इति । तत्र दुःखसंस्पर्शशून्यशाश्वतिकसुखसम्भोगासम्भवादित्यत्र शाश्वतिकमनादिनिधनम्, यद्वाऽऽदिमदपि प्रध्वंसवदपर्यवसानं सुखं विवक्षितम् । तत्रादिपर्यवसानशून्यं सुखं तावत् प्रेक्षाणामुपादित्सागोचर एव न भवति सदैव प्राप्तत्वात्, इति कुतस्तदभावः तत्राऽप्रवृत्तौ प्रेक्षाकारिणां कारणमभिधीयते ? । द्वितीयं तु सुखं भवत्येव तत्प्रवृत्तिनिमित्तम् । न च तस्याऽसंभवः, बाधकप्रमाणाभावात् । अनन्तं च तत्, तदानीं विनाशकारणाभावात् । तद्विनाशकारणं हि कर्म, न च तदानीं तदस्ति, तस्य समूलमुन्मूलित-

त्वात्; मिथ्यात्वाविरतिकषाययोगलक्षणस्य तत्कारणस्याभावाच्च न पुनरपि कर्मनिर्माणम्। कारणाभावात् तादृशसुखोत्पाद एव नास्तीति चेत्। न, सकलकर्मोपरमस्यैव तत्कारणस्य सद्भावात्। यच्चोक्तम्—विवेकहानस्य चाशक्यत्वादिति, तदेवमेव, सांसारिकसुखस्यैताहशत्वात्; तद्धि मधुदिग्धधाराकरालमण्डलाग्रग्रासवद् दुःखाकरोतीति युक्ता मुमुक्षूणां तज्जिहासा, किन्त्वात्यन्तिकसुखविशेषलिप्सूनामेव। ये अपि विषमधुनी एकत्राऽमत्रे संपृक्ते परित्यज्येते, ते अपि सुखविशेषलिप्सयैव। किञ्च, यथा प्राणिनां संसारावस्थायां सुखमिष्टम्, दुःखं चानिष्टम्; तथा मोक्षावस्थायां दुःखनिवृत्तिरिष्टा, सुखनिवृत्तिस्त्वनिष्टैव। ततो यदि त्वदभिमतो मोक्षः स्यात्, तदा न प्रेक्षावतामत्र प्रवृत्तिः स्याद्, भवति चेयम्। ततः सिद्धं मोक्षः सुखसंवेदनस्वभावः, प्रेक्षावत्प्रवृत्तिविषयत्वाऽन्यथानुपपत्तेरिति। अथ सुखसंवेदनैकस्वभावो यदि मोक्षः स्यात्, तदा तद्रागेण प्रयतमानो मुमुक्षुर्न मोक्षमधिगच्छेत्; न हि रागिणां मोक्षोऽस्तीति मोक्षविदः, तस्य बन्धनात्मकत्वात्। तदयुक्तम्। यो हि सुखसाधनेषु शब्दादिष्वभिष्वङ्गः स रागो बन्धनात्मकः, तस्य विषयार्जनरक्षणादिप्रवृत्तिद्वारेण संसारहेतुत्वात्। अनन्ते तु सुखे यद्यपि रागस्तथाऽप्यसौ सर्वविषयार्जनादिनिवृत्तिमोक्षोपायप्रवृत्त्योरेव हेतुः; अन्यथा तस्य सुखस्य प्राप्तुमशक्यत्वात्। न हि तद् विषयसाध्यम्, नापि तत्क्षीयते, येन विषयसुखार्थमिव पुनः पुनस्तदर्थं हिंसादिष्वऽपि प्रवर्तेत। तन्न बन्धहेतुर्मुमुक्षोरस्ति रागः, स्पृहामात्ररूपोऽपि चासौ परां कोटिमारूढस्यास्य निवर्तते, "मोक्षे भवे च सर्वत्र निस्पृहो मुनिसत्तमः" इति वचनात्; अन्यथा दुःखनिवृत्त्यात्मकेऽपि मोक्षे प्रयतमानस्य दुःखद्वेषकषायकालुष्यं किं न स्यात्?। अथ नास्त्येव मुमुक्षोर्द्वेषः। रागद्वेषौ हि संसारकारणमिति तौ मुमुक्षुर्मुञ्चति, द्वेष्टि च दुःखम्, इति कथमिदं सङ्गच्छेत? इति चेत्। तदितरत्राऽपि तुल्यम्। इति सिद्धं कृत्स्नकर्मक्षयात् परमसुखसंवेदनात्मा मोक्षः, न बुद्ध्यादिविशेष-

अत्र सर्गे इन्द्रवज्रोपेन्द्रवज्रयोः पादोद्भवोपजातिनामकं छन्दः, तल्लक्षणं तु प्रागभिहितम् । अन्त्ये वृत्तचतुष्टये हरिणीच्छन्दः, तल्लक्षणमपि पूर्वं प्रतिपादितमिति ।

. . . . . . . . . . . . . . . . . . . . . . . . .

इतीति कण्ठ्यम् ।

इति सकलसुविहितसभासार्वभौमसमानपण्डितमण्डलीमौलिमौलीयमानपण्डितश्रीकमलविजयगणिसुशिष्यमुख्यपण्डितपुरन्दरप्रख्यपण्डितश्रीविद्याविजयगणिविनेयवाचकगुणविजयगणिविरचितायां विजयप्रदीपिकाभिधानधारिकायां सुखावबोधिकायां श्रीविजयप्रशस्तिमहाकाव्यटीकायां अष्टमः सर्गोऽर्थतः समर्थितः ।



अर्हम्

## अथ नवमः सर्गः ।



अथ नवमः सर्गः समारभ्यते, अयं सर्गः श्रीअकब्बरपातिशाहिश्रीहीरविजयसूरिचरितरूपः, तेनाऽऽदावेकादशभिर्वृत्तैः सामान्येन पातशाहिश्रीमदकब्बरं कविर्वर्णयति—

इतश्च तीव्रातपतीव्रदीधिति-
प्रभप्रतापानलदीप्तदिग्मुखः ।
अकब्बरः शत्रुनितम्बिनीदृशा-
मनञ्जनीकारकृती विराजते ॥ १ ॥

इतश्चेत्यस्मिन्नवसरे, अकब्बरो नाम्ना पातशाहिः, विरा-

जत इत्यन्वयः । किं०, तीव्रः खर आतपो यस्याऽसौ तीव्रदीधितिः सूर्यस्तत्प्रभो यः प्रतापानलस्तेन दीप्तं भासितं दिग्मुखं येन सः, पुनः किं०, शत्रुनितम्बिनीदृशां वैरिनारीनयनानां, अनञ्जनीकारे कज्जलवत्त्वाभावकरणे कृती दक्षस्तद्भर्तॄणां व्यापादकत्वादिति ॥ १ ॥

चतुर्दिशां राज्यमरातिभूभुजां
यशश्चयोल्लासिविधौ विधुन्तुदः ।
फतेपुरे स्फूर्तिमति स्थितः स्थिर-
स्थितिर्दिवीवोष्णरुचिर्बिभर्ति यः ॥ २ ॥

यः पातिशाहिः, चतुर्दिशां राज्यं बिभर्तीत्यन्वयः । किं०, अरातिभूभुजां वैरिनृपाणां, यशश्चयोल्लासिविधौ कीर्त्तिवितानचन्द्रमसि, विधुन्तुदो राहुस्तद्ग्रासकृत्त्वात्, पुनः किं०, स्थितः, कस्मिन्, फतेपुरे लोके 'सीकरी' इति प्रसिद्धे, किं०, स्फूर्त्तिमति देदीप्यमाने, यः किं०, स्थिरा स्वाधीनत्वेन निश्चला स्थितिर्यस्य सः, यथा दिवि गगने, उष्णरुचिः सूर्यः, अपरेषां चन्द्राङ्गारकादीनां ग्रहाणां दीप्त्यभावाच्चतुर्दिशां राज्यं बिभर्तीति दृष्टान्तः ॥ २ ॥

वलक्षपक्षद्वयराजहंसभृद्
यदीयसेना सुरवाहिनी नवा ।
महाबलोत्सर्पितुरङ्गमोर्मिभाग्
विगाहते स्माऽखिलदिग्मुखानि या ॥ ३ ॥

वलक्षं धवलं पक्षद्वयं येषां ते वलक्षपक्षद्वयास्ते राज[हंस]ाः कलहंसा नृपोत्तमाश्च तान् बिभर्तीति वलक्षपक्षद्व[यरा]जहंसभृत्, यस्याऽकब्बरस्य सेना चमूर्यदीयसेना, नवा

सुरवाहिनी गङ्गा जातेति योगः । नवीनत्वे हेतुमाह–या सेना सुरवाहिनी अखिलदिग्मुखानि विगाहते स्म, सा गङ्गा त्वेक-दिग्मुखमवगाहते इयं तु चतुर्दिग्मुखानीति नवीनत्वे हेतुः; या किं०, महाबलाश्च ते उत्सर्पिणश्च अथवा महाबलवद् वायुवत् उत्सर्पिणो धावन्तो ये तुरङ्गमा अश्वा एवोर्मयः कल्लो-लास्तान् भजतीति महाबलोत्सर्पितुरङ्गमोर्मिभाक् वायुवेगाश्व-कल्लोलवतीति, गङ्गापक्षे महाबलेन वायुना उत्सर्पिण-इतस्ततो व्रजन्तः पुनः तुरङ्गमाः शीघ्रङ्गमा ये ऊर्मयस्तान् भजतीति भावार्थः ॥ ३ ॥

स्वःप्रेतयादःस्वपतिस्मयक्षयः
कृतोऽमुना दिग्विजयं वितन्वता ।
बलोद्धतं येन यशस्विना रजो
न्यधायि यद्दिग्दयिताऽलकेषु यत् ॥ ४ ॥

अमुनाऽकब्बरेण, दिग्विजयं वितन्वता दिग्विजयका-रिणा, स्वःप्रेतयादःस्वपतीनां अत्र पतिशब्दः प्रत्येकं चतुर्णां पुरः प्रयोज्यः, तेन स्वःपतिप्रेतपतियादःपतिस्वपतीनामिन्द्र-यमवरुणकुबेराणां स्मयक्षयो गर्वध्वंसः कृतः । कथं ज्ञात-मित्युत्तरार्धेनाह–यत्कारणात् , येन यशःस्विना कीर्ति-शालिनाऽकब्बरेण, बलोद्धतं बलेन कटकेनोद्धतं, रजो यद्दिग्-दयिता येषां दिशः पूर्वदक्षिणपश्चिमोत्तरास्ता एव दयिताः स्त्रियस्तासां अलकेषु केशेषु, न्यधायि क्षिप्तमिति । येन हि यत्कामिनीकुन्तलेषु धूलिर्दत्ता तेन तद्भर्तृगर्वापहारः सुतरां कृत इति निर्गलितार्थः ॥ ४ ॥

समं समा दिग्महिला रजस्वला
यदीयसैन्ये वसुधासु सर्पति ।

पतिं युवानं यमवाप्य भोगिनं
जयं प्रसूताः सुतमङ्कशायिनम् ॥ ५ ॥

यदीयसैन्ये यत्कटके, वसुधासु पृथ्वीषु, सर्पति चलति सति, समं समकालं, समाः सर्वाः, दिग्महिला रजस्वलाः पांसुमत्यः स्त्रीधर्मवत्यश्च जाता इति योगः । ततः किं जातमित्याह—यं भोगिनं पतिं भर्तारं, अवाप्य अङ्कशायिनं उत्सङ्गस्थायिनं, जयं वैरिजयरूपं, सुतं प्रसूता जनयांचक्रुरिति ॥ ५ ॥

न पेशलं कौशलमस्य सैन्यजं
वयं विधातुं विषयं गिरामलम् ।
विरोधिपाथोनिधिमेखलाभुजां
यदाऽऽददे द्रागसतीं जयश्रियम् ॥ ६ ॥

अस्याऽकब्बरस्य, सैन्यजं कटकोद्भवं, कौशलं नैपुण्यं, किं०, पेशलं मनोज्ञं, गिरां विषयं विधातुं वाग्गोचरीकर्तुं वक्तुमिति यावत्, वयं नाऽलं न समर्थाः, स्म इति शेषः । तत्कारणमेवाऽऽविष्कुरुते—यत्कारणात्, विरोधिपाथोनिधिमेखलाभुजां वैरिणां राज्ञां, असतीं अविद्यमानां, जयश्रियं जयलक्ष्मीं, आददेऽग्रहीत् ॥ ६ ॥

स्वस्मिन्नसद् येन भयं वितीर्यते
विरोधिनां येन जयो न सन्नपि ।
इत्युग्रचिन्ताचकितात्मनां जहु-
र्दृशो निमेषांस्त्रिदिवौकसां किमु ? ॥ ७ ॥

येनाऽकब्बरेण स्वस्मिन् असत् आत्मन्यविद्यमानं, भयं विरोधिनां वैरिणां, वितीर्यते दीयते इत्यन्वयः । पुनः, येन सन्नपि

विद्यमानोऽपि, जयो न वितीर्यते इति द्वितीयोऽन्वयः । कि-
ञ्चित्युत्प्रेक्ष्यते, इत्युग्रचिन्तया चकितात्मनां आकुलीभूतानां,
त्रिदिवौकसां देवानां, दृशो नेत्राणि, निमेषान् जहुस्त्यजन्ति
स्मेति ॥ ७ ॥

तुरङ्गलालापटलैः सुधोज्ज्वलै-
मदैर्गजानां शितिभिश्च भूरिभिः ।
नभःसरित्सूर्यसुतासमागमा-
दिवाऽभवत् तीर्थमदःपताकिनी ॥ ८ ॥

तुरङ्गाणां अश्वानां लालापटलैः किं०, सुधोज्ज्वलैः
पीयूषप्रभैर्धवलैरिति, पुनः गजानां मदैः किं०, शितिभिः
श्यामैः, नभःसरित्सूर्यसुतयोर्धवलाधवलयोर्गङ्गायमुनयोः समा-
गमात् तुरङ्गलालारूपा गङ्गा गजमदरूपा यमुना तयोः
संयोगात्; अदःपताकिनी अस्याऽकब्बरस्य पताकिनी सेना,
तीर्थमेवाऽभवत्; यतः "गङ्गायमुनयोर्योगे महातीर्थमुदाहृतम्"
इति पुराणवचनात् ॥ ८ ॥

यशो यदीयं कुमुदेन्दुसुन्दरं
जगुस्तमामित्यहिराजयोषितः ।
धरन् धरां नः पतिखेदमुल्वणं
जहार यः क्ष्माभरभारसंभवम् ॥ ९ ॥

यस्याऽकब्बरस्य संबन्धि यदीयं, यशः किं०, कुमुदेन्दु-
सुन्दरं कैरवकैरवबन्धुबन्धुरं, इति कारणात् अहिराजयोषितः शे-
षनागनार्यः, जगुस्तमां गायन्ति स्मेत्यन्वयः। इतीति कुत इत्याह-
यः शाहिः, धरां भूमिं, धरन् सन् नोऽस्माकं, पतिखेदं भर्तृश्रमं,
किं०, क्ष्माया भरेणाऽतिशयेन यो भारस्तत्संभवं, जहार

हृतवान् ॥ ९ ॥

पुरेषु शून्येषु यदीयविद्विषां
भृशोच्चसौधाग्रतृणाङ्कुराश्रितः ।
महोदरो द्राक् पिदधद् विधुं मृगो
न्यहन् स्वभर्तुस्तमसो भवं भयम् ॥ १० ॥

यदीयविद्विषां यस्याऽकब्बरस्य वैरिणां, शून्येषु पुरेषु भृशोच्चानि यानि सौधाग्राणि तेषु ये तृणाङ्कुराः, पद्मरोहास्तेषां आश्रितः प्रापणात्, मृगो मृगलाञ्छनलाञ्छनीभूतो महोदरः सन्, विधुं चन्द्रं, पिदधत् आच्छादयन्, स्वभर्तुश्चन्द्रस्य, तमसो भवं राहुजं, भयं न्यहन् हन्ति स्मेति ॥ १० ॥

अभूदगारातिकृतान्तपाशभृ-
द्धनाधिपेभ्योऽपि हि यो बली बहु ।
दधुर्दिशां भारममी यमुद्भटं
बिभर्ति चैष स्वयमेक एव तम् ॥ ११ ॥

योऽकब्बरः, अगाऽरातिः इन्द्रः कृतान्तो यमः पाशभृद् वरुणः धनाधिपः धनदः एभ्योऽपि, बहु अतिशयेन, बली बलवान् अभूदित्यन्वयः। बलवत्त्वे हेतुमाह—यस्मादित्यध्याहार्यम्, यं उद्भटमुत्कटं, चतुर्दिशां भारं अमी चत्वारोऽपि लोकपालाः, दधुर्धरन्ति स्म, तं दिशां भारं, एष शाहिः, एक एव स्वयमात्मना बिभर्तीति भावः ॥ ११ ॥

अथैकदा सोऽवनिजानिचन्द्रमा
नमन्नृपश्रेणिनिषेवितक्रमः ।
परत्रसंपत्सुकृतस्य वर्त्मनो-

ऽभवत् परीक्षासु विचक्षणेक्षणः ॥ १२ ॥

अथेत्यधुना, सोऽवनिजानिचन्द्रमा अकब्बरो राजेन्दुः, किं०, नमन्नृपश्रेणिभिर्निषेवितौ क्रमौ यस्य सः, एकदा कदाचिदेकस्मिन् दिने, परत्र परलोके संपद् यस्मादेवंविधं सुकृतं पुण्यं यस्मिन् तस्य, वर्त्मनो मार्गस्य, परीक्षासु विचक्षणं प्रवीणं ईक्षणं ज्ञानलोचनं यस्य सः, पारलौकिकपुण्यमार्गपरीक्षायां परीक्षकोऽभूदिति भावार्थः ॥ १२ ॥

श्रीमान् हमाऊतनयोऽरिपार्थिव-
प्रियाश्रुपूरैरभिषिक्तविक्रमः ।
स दर्शनानामतिदर्शनीयदृग्
जनान् समस्तान् मतिमानमीमिलत् ॥१३॥

सः श्रीमान् हमाऊतनयोऽकब्बरः, किं०, अरिपार्थिवप्रियाश्रूणां वैरिराजनारीनयननीराणां पूरैः, अभिषिक्तो विक्रमः पराक्रमो यस्य सः, स मतिमान् पुनः, अतिदर्शनीयदृग् धर्मप्रियत्वात् अतिदर्शनीयं विलोकनार्हं दृग् दर्शनं यस्य सः, दर्शनानां जनान् इत्यत्र धर्मधर्मिणोरभेदोपचाराद् बौद्धादीनां पञ्चानां दर्शनानां दर्शनिनः समस्तान् अमीमिलत्, आदौ पञ्चदर्शनजनान् संमील्य धर्माधर्मपरीक्षां कृतवानिति ॥ १३ ॥

अमीष्वसौ स्वस्वमतार्थवादिषु
प्रियं न पन्थानमपश्यदात्मनः ।
मणीमिवोच्चावचकेषु सद्रुचिं
रजस्तृणाश्मच्छगणादिपङ्क्तिषु ॥ १४ ॥

असौ शाहिः, स्वस्वमतार्थवादिषु निजनिजमताभिमतभाव-

भाषणपरेषु, अमीषु दर्शनिषु परीक्षितेषु सत्सु, आत्मनः प्रियं पन्थानं नाऽपश्यत् । दृष्टान्तमाह—रजस्तृणाऽश्मच्छगणादीनां पङ्क्तयो येषु तेषु, उच्चाऽवकरेषु प्रौढसंकरेषु, सद्रुचिं स्फुरत्कान्तिं, मणीमिव रत्नमिवेति, अत्र मणिवद् मणीशब्दोऽप्यस्तीति ध्येयम् ॥ १४ ॥

तदा मुदा तत्पदपद्मषट्पदो-
ऽतिमेतखानः शुभगीरदोऽवदत् ।
इहाऽस्ति शस्ताकृतिराप्तवाग् व्रती
महामतिर्हीर इति व्रतिप्रभुः ॥ १५ ॥

तदा शाहिना परीक्षितेषु सर्वेष्वपि पाखण्डिषु तथाविधं द्वेधाऽपि मनोज्ञं मुनिमपश्यता पृष्टः सन् अतिमेतखाननामा गूर्जरत्रासत्कः श्रीगुरून् दृष्टपूर्वी महामुद्गलः, किं०, तत्पदपद्मयोस्तस्य शाहेश्चरणकमलयोः षट्पदो रोलम्बः, पुनः किं०, शुभगीर्वरवचाः, अदो वक्ष्यमाणम्, अवददित्यन्वयः । इह जगति, हीर इति पदैकदेशे पदसमुदायोपचाराद् हीरो हीरविजयसूरिरिति, व्रतिप्रभुर्मुनीन्द्रः, किं०, शस्ताकृतिः रुचिराकारधारित्वात्, पुनः, आप्तवाक् सत्यभाषित्वात्, पुनः, महामतिः शास्त्रपारगत्वात्, अस्ति वर्तत इति ॥ १५ ॥

स एव देवाऽम्बुजबन्धुवच्छुभा-
ऽशुभाध्वनोस्त्वत्प्रिययोः प्रकाशकः ।
स चाधुना क्वेत्युदितेऽथ शाहिना
स शाहिमाह स्म पुनः पटिष्ठवाक् ॥ १६ ॥

स एव नाऽन्य इति अत्रैवकारोऽन्ययोगव्यवच्छेदकः, हे देव राजेन्द्र! अम्बुजबन्धुवत् सूर्य इव, त्वत्प्रिययोः परीक्षा

कर्तुमिष्टयोः, शुभाशुभाऽध्वनोः सत्यासत्यमार्गयोः, प्रकाशको-ऽस्तीत्यन्वयः । अधुना इदानीं, स हीरगुरुः क्काऽस्तीति शाहिना श्रीअकब्बरेण, उदिते सति, पुनः, सोऽतिमेतखानः, किं०, पटिष्ठवाक् प्रगल्भवचाः सन्, आह स्माऽभाषतेति ॥ १६ ॥

यदाह स्म तदाह—

पयोजिनीं हंस इवाऽच्छपक्षभाक्
स गूर्जरत्रामधुनाऽधितिष्ठति ।
निशम्य तद्वाचमदम्भजृम्भितां
मुदं दधौ शाहिरहार्यधर्मधीः ॥ १७ ॥

पयोजिनीं हंस इव स गुरुः, गूर्जरत्रामधुनाऽधितिष्ठति अधुना गूर्जरदेशे स्थितोऽस्तीति । हंसः स च कीदृशः, अच्छपक्षभाक् हंसपक्षेऽच्छौ पक्षौ छदौ, गुरुपक्षे मातृपितृलक्षणौ पक्षौ भजतीति सः, अथ तद्वाचं किं०, अदम्भजृम्भितां नास्ति दम्भजृम्भितं कैतवविलसितं यस्यां तां निष्कपटां, निशम्य शाहिः किं०, अहार्या धर्मे धीर्यस्य सः, मुदं दधौ हर्षितवानित्यर्थः ॥ १७ ॥

वितीर्य पत्रं फुरमानसंज्ञकं
समानमाह्वानकृते कृती गुरोः ।
घनादरेणाऽऽत्मजनान् स मेवडा-
भिधानथ स्म प्रहिणोति भूपतिः ॥ १८ ॥

अथ स भूपतिरकब्बरपातिशाहिः, समानं सबहुमानं, गुरोराह्वानकृते आकारणाय, फुरमानसंज्ञं पत्रं वितीर्य दत्त्वा, घनादरेण बह्वाग्रहेण, मेवडाभिधान् आत्मजनान् स्वाज्ञावलगकसेवकान्, प्रहिणोति स्म प्रैषीत् प्रत्यकमिपुरस्थं श्रीशाहि-

बखानाख्यं नृपमुख्यम्, अथ सोऽपि ज्ञातोदन्तः श्रीगुरून् गन्धारबन्दिरे स्थितान् मत्वा तान् शाहिसेवकान् गुरुपार्श्वे प्राहिणोदिति शेषः ॥ १८ ॥

जातावतारा जगतां हिताय ते
मुनीश्वराः कल्पितकल्पपादपाः ।
हवं नरेशस्य निशम्य सादरं
तदाऽभवंस्तत्र विहर्तुमुत्सुकाः ॥ १९ ॥

तदा तच्छाहिफुरमानं वाचयित्वा, ते मुनीश्वरा गुरवः, किं०, जगतां हिताय जातावताराः, पुनः, कल्पिते कल्पपादपाः नरेशस्याऽकब्बरस्य, हवं आह्वानं, निशम्याऽऽकर्ण्य, तत्र विहर्तुं उत्सुका अभवन्, गन्धारबन्दिराच्चतुर्मासकपारणके इति शेषः ॥ १९ ॥

अथ काव्यकलापकेन फतेपुरागमनं वर्णयति—

पदे पदे प्रौढमहोत्सवोत्सुकै-
र्जनैः प्रदत्ताद्भुतमानसंपदः ।
पदे पदे स्वस्तिकमुक्तमौक्तिकै-
र्वधूजनैर्मण्डितमङ्गलालयः ॥ २० ॥

पदे पदे सत्वरसंमुखागतै-
र्धराधिपैः सूत्रितसुन्दरादराः ।
पदे पदे प्राप्तघनार्थसंचयैः
सदर्थिभिर्गीतमनोज्ञगीतयः ॥ २१ ॥

रजोभिरंह्युच्छलितैर्भुवस्तलं

विभूषयन्तो द्युसदामपि प्रियैः ।
महाव्रतिप्रीतिकलैर्जलैर्नभः-
सरित्प्रवाहा इव विश्वपावनाः ॥ २२ ॥

सदा समुल्लासभृतः सुपर्वभि-
स्तापं हरन्तो जगतां गुरूत्तमाः ।
क्रमादलञ्चक्रुरभङ्गवैभव
फतेपुरश्रीत्रिपुरारिमस्तकम् ॥ २३ ॥

अथ क्रमाद् गन्धारबन्दिराद् मार्गशीर्षासितसप्तम्यां पुष्पार्कयोगे विंशे रवियोगे राजयोगे च सति शुभे मुहूर्त्ते प्रशस्तशकुननिमित्तसञ्जातसद्विक्रमा गुरूत्तमाः किं०, पदे पदे स्थाने स्थाने वा पादन्यासरूपे पदे पदे वा, प्रौढमहोत्सवोत्सुकैर्महामहोत्सवकरणपरायणैः, जनैर्लोकैः, प्रदत्ताद्भुतमानसंपदः कृतबहुमानश्रियः, पुनः किं०, पदे पदे स्वस्तिकेषु मुक्तानि मौक्तिकानि यैस्तैः, वधूजनैर्नारीगणैः, मण्डिता मङ्गलालिर्येषां ते ॥२०॥ पुनः किं०, पदे पदे सत्वरं शीघ्रं संमुखागतैरभिमुखागतैः, धराधिपैर्नरेन्द्रैः, सूत्रितः कृतः सुन्दर आदरो येषां ते, पुनः किं०, पदे पदे प्राप्तो घनो महान् अर्थसंचयो धनसमूहो यैस्तैः, सदर्थिभिर्गान्धर्वभट्टप्रभृतिभिरर्थिभिर्याचकैः, गीता मनोज्ञा गीतिः कीर्त्तिरूपा येषां ते ॥ २१ ॥ पुनः किं कुर्वन्तः, विभूषयन्तः, किं०, भुवस्तलं पृथ्वीतलं, कैः, अंह्र्युच्छलितैश्चरणोत्थै रजोभिः, किं०, द्युसदामपि देवानामपि, प्रियैः, पुनः किं०, विश्वपावनाः, क इवेत्याह—नभःसरित्प्रवाहा गङ्गाप्रवाहा इव जगत्पावित्र्यकारकाः, कैः, जलैः, किं०, द्युसदामपि प्रियैरिदं तुल्यं विशेषणम्, पुनः किं०, महाव्रतिनो महादेवस्य प्रीतेः

कला येभ्यस्तैः, रजःपक्षे महाव्रतिनां महामुनीनां प्रीतिकला येभ्यस्तैः ॥२२॥ पुनः किं०गुरूत्तमाः गङ्गाप्रवाहाश्च, सुपर्वभिः समुल्लासभृतः गुरुपक्षे सुपर्वभिः शोभनोत्सवैः, गङ्गाप्रवाहपक्षे सुपर्वभिर्देवैः, पुनः, तापं संतापं, हरन्तो जगतां जगद्वर्तिजनानां, क्रमेण गूर्जरदेशाद् मरुस्थलीदेशमध्ये भूत्वा विहरन्तः सन्तः, अभङ्गवैभवं फतेपुरश्रीत्रिपुरारेरीश्वरस्य मस्तकमलञ्चक्रुरिति चतुर्णां व्याख्येति ॥ २३ ॥

त्रिभिः प्रवेशोत्सवं वर्णयति—

अथाङ्कहव्याशनभूपवत्सरे
त्रयोदशीवासर इन्दुवर्जिते ।
शुक्रे च मासे त्रिजगन्मनःसुख-
प्रदे प्रभाते त्रिदशेशमन्त्रिणि ॥ २४ ॥

दधत्सु शृङ्गारिसुहासिनीजन-
प्रणीतगीतैरतिमेदुरां मुदम् ।
ददत्सु दानं धनकाञ्चनाऽम्बरो-
र्मिकातुरङ्गद्विपमुख्यवस्तुनः ॥ २५ ॥

दुकूलदिव्याम्बररत्नकाञ्चना-
द्यलङ्कृतिस्तोममनोज्ञमूर्त्तिषु ।
जनेषु कुर्वत्सु महोत्सवान् बहून्
पुरे प्रवेशं विदधुर्दमीश्वराः ॥ २६ ॥

अथ दमीश्वरा गुरवः फतेपुरपुरे प्रवेशं विदध्युरित्यन्वयः । कस्मिन्, अङ्का नव, हव्याशना अग्नयस्त्रयः, राजानः षोडश, एतेऽङ्का वामतो गत्या मीलिता यत्र

तत्र अङ्कहव्याशनभूपवत्सरे १६३९ वर्षे पुनः, त्रयोदशीवासरे किं०, इन्दुवर्जिते श्यामायां त्रयोदश्यामिति, पुनर्मासे, किं०, शुक्रे ज्येष्ठाख्ये, पुनः, प्रभाते प्रातर्वेलायां प्रथमयामे, पुनः, त्रिदशेशमन्त्रिणि गुरुवारे ॥ २४ ॥ पुनः, बहून् महोत्सवान् जनेषु कुर्वत्सु, जनेषु किं कुर्वत्सु, दधत्सु बिभ्रत्सु, कां, अतिमेदुरां मुदं हर्षं, कैरित्याह—शृङ्गारिसुहासिनीजनप्रणीतगीतैः शृङ्गारी शृङ्गारवान् यः सुहासिनीजनः सधववधूजनस्तेन प्रणीतानि यानि गीतानि तैः, पुनर्जनेषु किं०, दानं ददत्सु, कस्येत्याह—धनकाञ्चनाम्बरोर्मिकातुरङ्गद्विपमुख्यवस्तुनः, अत्र धनकाञ्चनाम्बरादिभ्यो द्विपदानं सर्वोत्तममभूतपूर्वत्वात् तत्तु मेडतादङ्गवासिना सा०—सदारङ्गाभिधानेन श्राद्धेन दत्तमिति॥२५॥ पुनर्जनेषु कीदृशेषु, दुकूलदिव्याम्बररत्नकाञ्चनाद्यलङ्कृतीनां पट्टकूलप्रवरवस्त्रमणिसुवर्णप्रमुखालङ्काराणां स्तोमेन समूहेन मनोज्ञा मूर्तयोऽङ्गानि येषां तेषु लोकेषु मिलितेषु, साडम्बरं श्रीगुरवः सीकरीद्रङ्गे प्रवेशं चक्रुरिति । इति त्रयाणां व्याख्या ॥ २६ ॥

विपक्षसंपत्तटिनीपयोधिना
नयाम्बुजोल्लाससहस्ररश्मिना ।
विधाय पूर्वं मिलनं महीभुजा
प्रतिश्रये नः प्रतिगन्तुमर्हति ॥ २७ ॥

समर्थनिर्ग्रन्थगृहस्थसार्थसत्-
परिच्छदोपासितपादपङ्कजाः ।
विचार्य चित्तान्तरिति व्रतीश्वरा
अकब्बरोर्वीश्वरसौधमभ्यगुः ॥ २८ ॥

महीभुजाऽकब्बरशाहिना, किं०, विपक्षसंपत्तटिनीपयोधिना वैरिलक्ष्मीनदीसमुद्रेण, पुनः किं०, नयाम्बुजोल्लाससहस्ररश्मिना न्यायनलिनविकासनसूर्येण सह सार्द्धं, पूर्वं प्राग्, मिलनं विधाय ततः पश्चान्नोऽस्माकं, प्रतिश्रये वसतौ, गन्तुमर्हतीति गमनं योग्यतामेतीति भावः ॥ २७ ॥ इति विचिन्त्य किं चक्रुस्तदग्रेतनवृत्तेनाह— इति चित्तान्तर्मनसि, विचार्य व्रतीश्वरा गुरवः, किं०, समर्था द्विधाऽपि श्रुतशरीरबलेन संपन्ना ये निर्ग्रन्था अधिकारात् समीपवर्त्तिनः सैद्धान्तिकशिरोमणिवाचकश्रीविमलहर्षगणिसकलाष्टावधानशतावधानाद्यनेकराजरञ्जनकलाकुमुदिनीचन्द्रवाचकश्रीशान्तिचन्द्रगणिपण्डितसहजसागरगणिपण्डितसिंहविमलगणिवक्तृत्वकवित्वकलाश्रीहेमाचार्यानुकारिप्रस्तुतकाव्यकारिपण्डितहेमविजयगणिवैयाकरणचूडामणिपण्डितलाभविजयगणिश्रीगुरुप्रधानधनविजयगणिप्रमुखाः साधवः, पुनर्गृहस्थाः श्रावका ये साधुश्रीथानसिङ्घसा०— मानसिंघसा०— कल्याणप्रमुखास्तेषां ये सार्थाः समूहास्तेषां सन् श्रेष्ठो विद्यमानो वा यः परिच्छदः परिवारस्तेन उपासितं सेवितं पादपङ्कजं येषां ते समर्थनिर्ग्रन्थगृहस्थसार्थसत्परिच्छदोपासितपादपङ्कजाः, श्रीहीरविजयसूरिपादा अकब्बरोर्वीश्वरसौधं शाहिसौधं, अभ्यगुः प्राप्तवन्त इति । इदमर्थतो युग्मम् ॥ २८ ॥

इमं समायान्तमदभ्रविभ्रमं
त्रयोदशर्षिप्रमुखैर्वृतं गुरुम् ।
अकब्बरः प्रेक्ष्य मुदं दधौतमां
शिखीव पाथोमुचमुन्नतं दिवि ॥ २९ ॥

इमं गुरुं किं०, अदभ्रविभ्रमं भूरिशोभं, पुनः किं०, त्रयोदश ये केचिदुक्ताः केचिच्चाऽनुक्ता ऋषिप्रमुखा मुनिमुख्याः "प्रमुखं

प्रथमे मुख्ये" इति वचनात् तैस्त्रयोदशर्षिप्रमुखैः, वृतं परिकरितं, समायान्तं प्रेक्ष्य अकब्बरः शाहिः, मुदं दधौतमां अतिहर्षितवान्। दृष्टान्तमाह—यथा पाथोमुचं मेघं, दिव्याकाशे, उन्नतं प्रेक्ष्य शिखी मयूर इवेति ॥ २९ ॥

नृपोऽभिगच्छन् सुमनोमनोरमो
भाति स्म साक्षादिव वासवस्तदा ।
विधाय सुस्वागतमागतोचितं
मुदाऽनमस्यच्च गुरोः पदद्वयीम् ॥ ३० ॥

तदा गुरून् प्रति अभिगच्छन् संमुखं व्रजन्, नृपोऽकब्बरशाहिः, भाति स्मेत्यन्वयः । इवोत्प्रेक्ष्यते—साक्षाद्वासवः शक्र इव, किं०, सुमनोमनोरमः, नृपपक्षे सुमनसा शोभनचित्तेन मनोरमः, अथवा सुमनोभिः प्राज्ञैर्मनोरमस्तत्परिवृतत्वात्; शक्रपक्षे सुमनोभिः सुरैर्मनोरम इति, आगतोचितं सुस्वागतमित्यादिप्रश्नं विधाय, गुरोः श्रीहीरविजयसूरेः, पदद्वयीं मुदाऽनमस्यत् प्राणमत् ॥ ३० ॥

शाहेर्नमतो गुरुः किं बभाणेत्याह—

अजय्यचेतोजतमोभवान्तकृद्
वृषाङ्कवैकुण्ठविरञ्चिसन्निभः ।
नृपाय कल्याणलतापयोमुचा
तदाऽभ्यनन्दत् सुकृताशिषा गुरुः ॥ ३१ ॥

गुरुः किं०, अजय्योऽजेयो यश्चेतोजः स्मरस्तथा तमः पापं भवश्च संसारस्तेषां चेतोजतमोभवानां अन्तकृद्विनाशकारी, अत एव वृषाङ्कवैकुण्ठविरञ्चिसंनिभः हरहरिहिरण्यगर्भतुल्य-

स्तथाहि—चेतोजान्तकृत्त्वेन नृपाङ्कः; तमसो गुणविशेषस्य राहोर्वा अन्तकृत्त्वेन वैकुण्ठो विष्णुः, भवान्तकृत्त्वेन विरञ्चितुल्यश्चेति; ईदृग्गुरुस्तदा तन्नमनावसरे, नृपायाऽकब्बराय, कल्याणलता-पयोमुचा मङ्गलवल्लिजलधरेण, सुकृताशिषा धर्मलाभरूपाशीर्वादेन, अभ्यनन्दत् तोषयामासेत्यर्थः ॥ ३१ ॥

त्रयोऽप्यथ स्वात्मभुवो भुवोमिल-

ल्ललाटपट्टाः सुखिताखिलप्रजाः ।

तदेरिताः क्ष्मापतिना गुरूत्तमान्

हिमोष्णवर्षासमया इवाऽनमन् ॥ ३२ ॥

अथ त्रयोऽपि स्वात्मभुवः निजनन्दनाः शेखूजीपाहडीदानीआरनामानः कुमाराः, किं०, भुवः पृथ्व्या मिलन् ललाटपट्टो येषां ते, पुनः किं०, सुखिताः सुखीकृता अखिलाः प्रजा लोका यैस्ते, पुनः किं०, क्ष्मापतिनाऽकब्बरेण, ईरिताः सन्तः, गुरूत्तमान्, हिमोष्णवर्षासमयाः शीतकालग्रीष्मकालवर्षाकाला इव, किं०, सुखिता अखिलप्रजाः स्वस्वगुणैर्यैस्ते, त्रयोऽपि अनमन् प्रणताः, इवेत्युत्प्रेक्षा ॥ ३२ ॥

त्रयोऽपि शेखूप्रमुखा नृपाङ्गजा-

स्त्रिलोकलोका इव पुण्यवृत्तयः ।

तदा गुरोर्दर्शनतोऽतिशायिनीं

मुदं समीयुर्वसुधासुधाञ्जनात् ॥ ३३ ॥

तदा तत्र क्षणे, गुरोर्दर्शनतः, किं०, वसुधाया भूमेरुपचारात्तद्वासिनो जनस्य सुधाञ्जनादमृताञ्जनभूतात्, ते शेखूप्रमुखा नृपाङ्गजाः शाहिसूनवस्त्रयोऽपि, इवोत्प्रेक्ष्यते—त्रिलोकलोकाः स्वर्गमर्त्यपाताला इव, पुण्यवृत्तयः पवित्राचाराः,

अतिशायिनीं मुदं समीयुर्महाहर्षुला जाता इति ॥ ३३ ॥

तदा च तेषां क्षितिपात्मजन्मनां
गुरुस्त्रयाणामपि पुण्यतेजसाम् ।
वृषाशिषं द्राग् व्यतरद् हुतिं हवि-
र्भुजां द्विजन्मेव महःप्रदायिनीम् ॥ ३४ ॥

तदा तेषां क्षितिपात्मजन्मनां पातिशाहिपुत्राणां, त्रयाणामपि, किं०, पुण्यतेजसां पवित्ररुचां, तदा गुरुर्वृषाशिषं धर्मलाभं, व्यतरद् दत्तवान् । दृष्टान्तमाह—यथा द्विजन्मा ब्राह्मणः, हविर्भुजां वह्नीनां, हुतिं किं०, महःप्रदायिनीं तेजःप्रदायिनीं, वृषाशिषं किं०, महप्रदायिनीं उत्सवप्रदायिनीं, वितरति ॥ ३४ ॥

चरित्रमाहारविहारसंलया-
श्रयोपवासासनपानगोचरम् ।
अथ स्वयं प्रेषितपूरुषाननाद्
निशम्य सूरेर्मुमुदे महीपतिः ॥ ३५ ॥

अथ स्वयं प्रेषिताः पूर्वं ये मेवडाभिधाना गुरूणामाकारणाय प्रेषितास्तेषामाननाद् मुखात्, सूरेश्चरित्रं वृत्तं, किं०, आहारविहारसंलयाश्रयोपवासासनपानगोचरं आहारो नित्यैकभक्तरूपः, विहारः सूर्योदये सत्येव पादचाररूपः, संलयस्त्रियामायास्तृतीये यामे निद्राकरणरूपः, आश्रयो याचितवसतिवसनरूपः, उपवासा एकस्मिन् मासि जघन्यतः षडुपवासकरणरूपाः, आसनं मासाष्टके भूमावेवोपवेशनरूपं, पानं तप्तस्यैव पानीयस्येति गोचरं एतद्विषयं, गुरुवृत्तं निशम्य, महीपतिः शाहिः, मुमुदे हर्षमधात् ॥ ३५ ॥

अथैकतः संयमिलोकनायकौ
स्थितौ व्यभातामभितः प्रकाशकौ ।
विधेर्वशात् संगमितौ क्षमाधरौ
सुरारिजिच्छैलहिमालयाविव ॥ ३६ ॥

अथैकतो विजने सभामण्डपदेशे, संयमिलोकनायकौ संयमिनायकलोकनायकौ गुरुभूपौ, स्थितौ पीठोपविष्टौ, पुनः, अभितः सर्वतः, प्रकाशकौ व्यभातां भातः स्मेति । इवोत्प्रेक्ष्येते–विधेर्वशाद् दैववशात्, सुरारिजिच्छैलहिमालयौ संगमितौ मेरुहिमाचलौ, किं०, मिलितौ; किं०, क्षमाधरौ एकत्र क्षमाश्रमणत्वात् क्षमा क्षान्तिः, अन्यत्र क्षमा पृथ्वी पृथिवीपतित्वादिति ॥३६॥

विशारदव्रातवृतस्य धर्मिणो
गुरोः पुरःस्थः स्थिरदृक् स्थिरेश्वरः ।
अपृच्छदच्छं परमात्मनः प्रभोः
स्वरूपमास्तिक्यसमं सविस्तरम् ॥ ३७ ॥

स्थिरा पृथिवी तस्या ईश्वरः स्थिरेश्वरो राजाऽकब्बरशाहिः, किं०, स्थिरदृक् निश्चलदृष्टिः, पुनर्गुरोः पुरःस्थः, गुरोः किं०, विशारदव्रातवृतस्य पण्डितपटलपरिकरितस्य, पुनः, धर्मिणो यतिधर्मधारिणः, परमात्मनः प्रभोः परमेश्वरस्य, स्वरूपं अपृच्छत् अच्छं निर्मलमिति, क्रियाविशेषणं वा, पुनः किं०, सविस्तरं, क्रियाविशेषणं वा; पुनः कथं आस्तिक्येन श्रद्धया तुल्यमित्यास्तिक्यसमम् ॥ ३७ ॥

पुरातनाचार्यवरैर्निरूपितं
न्यरूपि पूज्यैस्तदशेषमुत्तमम् ।

पिबन् श्रुतिभ्यां तदतुष्यदुर्वरा-

पतिश्च वीणाक्कणितं फणीव सः ॥ ३८ ॥

तत्परमात्मनः स्वरूपं, किं०, अशेषं समस्तं, पुनः, उत्तम-मुत्कृष्टं, यथा पुरातनाचार्यवरैः प्राचीनानूचानेन्द्रैः श्रीसिद्धसे-नदिवाकरकलिकालसर्वज्ञबिरुदधारकश्रीहेमाचार्यादिभिः श्री-विक्रमार्कश्रीकुमारपालादीनां पुरो निरूपितं तथा तैरपि पूज्यै-र्न्यरूपि प्रोक्तमिति, तत्स्वरूपं श्रुतिभ्यां कर्णाभ्यां, पिबन् अत्यादरेण शृण्वन्, उर्वरापतिः शाहिः, अतुष्यत् तुतोष । दृष्टान्त-मत्राह—यथा वीणाक्कणितं वल्लकीनादं, शृण्वन् फणी भुजङ्ग-इवेति ॥ ३८ ॥

निशम्य सम्यक् प्रविचार्य चात्मना

यथास्थितं तन्मुदमाप भूपतिः ।

मनःसुखामुक्तिमवाप्य धीमतां

न कस्य हर्षः खलु जायतेतमाम् ? ॥३९॥

भूपतिस्तद् यथास्थितं गुरूदितं, निशम्य श्रुत्वा, च पुनः, आत्मना स्वयं, प्रविचार्य मुदमाप हर्षं प्राप्तवान्, खलु निश्चितं, धीमतां पण्डितानां, उक्तिं वाणीं, कीदृशीं, मनःसुखां चेतःसौ-ख्यकारिणीं, अवाप्य कस्य सकर्णस्य पुंसो हर्षो न जायते-तमां न भवतितराम्, अपि तु सर्वस्याऽपि जायते इति ॥३९॥

अभूद् निजे धामनि वाङ्मयं पुरा

द्विधाऽऽत्म जैनं च यदैश्वरं च यत् ।

गुरोस्तदुर्वीपतिराश्वदर्शयद्

वदन् वरीयो विनयाञ्चितं वचः ॥ ४० ॥

निजे धामनि शाहेः सद्मनि, पुरा पूर्वं, यद् वाङ्मयं शास्त्रं, किं०, जैनं जिनागमरूपमङ्गोपाङ्गमूलमूत्रादि, च पुनः, ऐश्वरं यत् शिवशासनसंबन्धि भागवतभारतपुराणरामायणादि, इति द्विधात्म द्विप्रकारकं नागपुरीयतपापक्षीयपद्मसुन्दरश्वेताम्बरसत्कं, अभूत् तत् उर्वीपतिः शाहिः, गुरोरदर्शयत् गुरोः पुरः प्राभृतीकृतवान्, पुनर्विनयाश्रितं वचो वदन् यूयं पुस्तकमिदं गृह्णीतेति वाक्यं ब्रुवन्, आशु शीघ्रं, तदा दर्शयामासेति भावः ॥ ४० ॥

विदन्नदस्तद्गुरुराददे च ना-
धुनैतदादानमकीर्तिकारि नः ।
नृपो विशेषाद् मुमुदे निरीहतां
निरीक्ष्य सूरेरतिशायिनीमिमाम् ॥४१॥

अधुनेदानीम्, एतदादानं पुस्तकग्रहणमपि, नोऽस्माकं, अकीर्तिकारि राढाकृद् नेति, अदो विदन् इति जानन् , गुरुस्तद् नाऽऽददे न गृहीतवान्, ततः कारणादिमां अतिशायिनीं निरीहतां पुस्तकस्यापि मुक्तिरूपां निःस्पृहतां, निरीक्ष्य नृपो विशेषाद् मुमुदेऽतिमुदितोऽभूद्; अहो ! एते निःस्पृहा यदि पुस्तकमपि न गृह्णन्ति तदा मया दीयमानममानधनकाञ्चनकाश्यपीप्रमुखं कथं गृह्णन्तीति मुन्निदानम् ॥ ४१ ॥

आगृह्य भूयोऽपि ददौ नृपस्तदा
तद्भारतीगेहमिवापरं परम् ।
अकब्बरीयाभिधया च कोशगं
तत्पुस्तकं सर्वमचीकरद् गुरुः ॥ ४२ ॥

तदा तस्मिन् पुस्तके गुरुणाऽगृहीते सति, भूयो-

ऽपि पुनरपि, आगृह्य निर्बन्धं विधाय, नृपस्तद्भारतीगेहमिव अपरं सरस्वतीगृहमिव, परं प्रकृष्टं केवलं वा, ददौ दत्तवान्, गुरुर्निरीहः सन् यच्चकार तदुत्तरार्धेनाह–गुरुस्तत्पुस्तकं सर्वं द्विप्रकारमपि, अकब्बरीयाभिधया अकब्बरशाहिनाम्ना, कोशगं भाण्डागारगतं, अचीकरत् कारयामास, आगराख्ये नगरे भाण्डागारे स्थापितवानिति शेषः ॥ ४२ ॥

नृपेण दत्त्वा बहुमानमानम-
न्महीमहेन्द्रव्रजसेवितांह्रिणा ।
गुरुर्विसृष्टो निरगात् तदोकसः
पयोधराभ्रादिव घर्मदीधितिः ॥ ४३ ॥

गुरुर्नृपेण बहुमानं दत्त्वा विसृष्टोऽनुज्ञातः सन्, तदोकसस्तद्गृहाद्, निरगादित्यन्वयः । नृपेण किं०, आनमन्महीमहेन्द्रव्रजसेवितांह्रिणा प्रणमद्भूपालजालजुष्टचरणेन । दृष्टान्तमाह–इव यथा, पयोधराभ्राद् मेघवार्दलाद्, घर्मदीधितिः सूर्य इवेति ॥ ४३ ॥

विलोक्य मेने नृपगोपुरे पुरः
समेतमेतं गुरुमास्तिकैरिति ।
किमन्तिमार्हज्जनिराशितोऽद्य दु-
र्ग्रहोऽवरूढः खलु भस्मनामकः ॥ ४४ ॥

नृपगोपुरे राजद्वारप्रतोल्यां, एतं गुरुं पुरः समेतं विलोक्य आस्तिकैरिति मेने इत्यचिन्ति । तदेवाह–खलु इति निश्चयार्थे, अद्य किं अन्तिमार्हज्जनिराशितः श्रीमहावीरजन्मराशेः, भस्मनामको दुर्ग्रहः अवरूढ इति उत्तीर्णो मेने ॥ ४४ ॥

धराधिपाज्ञागतभूरितूरसत्-
स्वनैर्भवद्भिर्बधिरीकृताम्बरे ।
ददद्भिरर्थिप्रकरेभ्य ईप्सितां
श्रियं महेभ्यैरतिचारुचत्वरे ॥ ४५ ॥

महोत्सवे गायनगीतगौरवे
प्रभूतपद्माढ्यमलञ्चकार तम् ।
विमानमानर्द्धिमुपाश्रयं गुरुः
स मानसौका इव मानसं सरः ॥ ४६ ॥

धराधिपस्य अकब्बरस्याऽऽज्ञया आगतानि भूरीणि यानि तूराणि वादित्राणि तेषां सत्स्वनैः शोभनध्वानैः, बधिरीकृतमम्बरमाकाशं यस्मिन् तस्मिन्, महोत्सवे जायमाने सतीतिशेषः । पुनर्महोत्सवे कीदृशे, अर्थिप्रकरेभ्यो याचकव्रजेभ्यः, ईप्सितां वाञ्छितां, श्रियं ददद्भिर्महेभ्यैरतिचारूणि मनोहराणि चत्वराणि यत्र तत्र ॥ ४५ ॥ पुनर्महोत्सवे किं०, गायनगीतानां गौरवं यत्र तत्र, गुरुस्तमुपाश्रयं अलञ्चकार, किं०, प्रभूतपद्माढ्यं भूरिशोभाढ्यं, अन्यत्र भूरिपङ्कजाढ्यं, पुनः, विमानमाना स्वर्भवनप्रमाणा ऋद्धिर्यत्र तं, दृष्टान्तमाह—मानसौका राजहंस इव, मानसाख्यं सर इवेति यथा । इति युग्मव्याख्या ॥ ४६ ॥

दिनान्युषित्वा कतिचित् फतेपुरे
प्रजाप्रभुप्रेमपयोनिधौ विधुः ।
स आगराख्ये नगरे गरीयसि

क्रमाच्चतुर्मासकमासितो गुरुः ॥ ४७ ॥

स गुरुः फतेपुरे कतिचिद् दिनानि उषित्वा स्थित्वा, ततो योजनत्रिकान्तरिते आगराख्ये नगरे शाहिसाम्राज्यराजधानी-रूपे, पुनः, गरीयसि महति, चतुर्मासकं आसितः स्थितः, गुरुः किं०, प्रजाप्रभुरकब्बरस्तत्प्रेमपयोनिधौ विधुश्चन्द्रस्तदुल्लासवृद्धिकारित्वादिति ॥ ४७ ॥

निरन्तरं श्रीगुरुवज्रिणो व्यधात्
प्रशंसनं शाहिरिति स्वपर्षदि ।
क्रियासु वाक्येषु च तुल्यमीदृशं
न चान्यमद्राक्षमहं मुनिं क्वचित् ॥ ४८ ॥

श्रीगुरुवज्रिणः सूरीन्द्रस्य, शाहिः स्वपर्षदि इति प्रशंसां व्यधात्, इति कथं तदेवोत्तरार्धेनाह—क्रियासु धर्मकर्त्तव्यरूपासु, वाक्येषु सत्यभाषणरूपेषु, तुल्यं ईदृशं अन्यं मुनिं व्रतिनं, अहं नाऽद्राक्षं नाऽपश्यमिति ॥ ४८ ॥

अथो गुरूणां पुरि तत्र तस्थुषां
निशम्य शाहिर्महिमानमद्भुतम् ।
दधद् मुदं पर्युषणादिनाऽभय-
प्रदेशनाख्यान् पटहानवीवदत् ॥ ४९ ॥

तत्र पुरि आगराख्ये, तस्थुषां तेषां गुरूणां, अद्भुतं महिमानं निशम्य मुदं दधत् शाहिः पर्युषणादिनाऽभयप्रदेशनाख्यान् संवत्सरपर्वसम्बन्धिवासरामारिप्रवर्त्तकान् पटहान् अवीवदत् सेवकैर्वादयामास, पर्युषणापर्वसत्कामष्टाहिकां यावज्जीवामारिं कारयामासेति भावार्थः ॥ ४९ ॥

धराधिपाज्ञागतभूरितूरसत्-
स्वनैर्भवद्भिर्बधिरीकृताम्बरे ।
ददद्भिरर्थिप्रकरेभ्य ईप्सितां
श्रियं महेभ्यैरतिचारुचत्वरे ॥ ४५ ॥

महोत्सवे गायनगीतगौरवे
प्रभूतपद्माढ्यमलञ्चकार तम् ।
विमानमानर्द्धिमुपाश्रयं गुरुः
स मानसौका इव मानसं सरः ॥ ४६ ॥

धराधिपस्य अकब्बरस्याऽऽज्ञया आगतानि भूरीणि यानि तूराणि वादित्राणि तेषां सत्स्वनैः शोभनध्वानैः, बधिरीकृतमम्बरमाकाशं यस्मिन् तस्मिन्, महोत्सवे जायमाने सतीतिशेषः । पुनर्महोत्सवे कीदृशे, अर्थिप्रकरेभ्यो याचकव्रजेभ्यः, ईप्सितां वाञ्छितां, श्रियं ददद्भिर्महेभ्यैरतिचारूणि मनोहराणि चत्वराणि यत्र तत्र ॥ ४५ ॥ पुनर्महोत्सवे किं०, गायनगीतानां गौरवं यत्र तत्र, गुरुस्तमुपाश्रयं अलञ्चकार, किं०, प्रभूतपद्माढ्यं भूरिशोभाढ्यं, अन्यत्र भूरिपङ्कजाढ्यं, पुनः, विमानमाना स्वर्भवनप्रमाणा ऋद्धिर्यत्र तं, दृष्टान्तमाह—मानसौका राजहंस इव, मानसाख्यं सर इवेति यथा । इति युग्मव्याख्या ॥ ४६ ॥

दिनान्युषित्वा कतिचित् फतेपुरे
प्रजाप्रभुप्रेमपयोनिधौ विधुः ।
स आगराख्ये नगरे गरीयसि

क्रमाच्चतुर्मासकमासितो गुरुः ॥ ४७ ॥

स गुरुः फतेपुरे कतिचिद् दिनानि उषित्वा स्थित्वा, ततो योजनत्रिकान्तरिते आगराख्ये नगरे शाहिसाम्राज्यराजधानीरूपे, पुनः, गरीयसि महति, चतुर्मासकं आसितः स्थितः, गुरुः किं०, प्रजाप्रभुरकब्बरस्तत्प्रेमपयोनिधौ विधुश्चन्द्रस्तदुल्लासवृद्धिकारित्वादिति ॥ ४७ ॥

निरन्तरं श्रीगुरुवज्रिणो व्यधात्
प्रशंसनं शाहिरिति स्वपर्षदि ।
क्रियासु वाक्येषु च तुल्यमीदृशं
न चान्यमद्राक्षमहं मुनिं क्वचित् ॥ ४८ ॥

श्रीगुरुवज्रिणः सूरीन्द्रस्य, शाहिः स्वपर्षदि इति प्रशंसां व्यधात्, इति कथं तदेवोत्तरार्धेनाह–क्रियासु धर्मकर्त्तव्यरूपासु, वाक्येषु सत्यभाषणरूपेषु, तुल्यं ईदृशं अन्यं मुनिं व्रतिनं, अहं नाऽद्राक्षं नाऽपश्यमिति ॥ ४८ ॥

अथो गुरूणां पुरि तत्र तस्थुषां
निशम्य शाहिर्महिमानमद्भुतम् ।
दधद् मुदं पर्युषणादिनाऽभय-
प्रदेशनाख्यान् पटहानवीवदत् ॥ ४९ ॥

तत्र पुरि आगराख्ये, तस्थुषां तेषां गुरूणां, अद्भुतं महिमानं निशम्य मुदं दधत् शाहिः पर्युषणादिनाऽभयप्रदेशनाख्यान् संवत्सरपर्वसम्बन्धिवासरामारिप्रवर्त्तकान् पटहान् अवीवदत् सेवकैर्वादयामास, पर्युषणापर्वसत्कामष्टाहिकां यावज्जीवामारिं कारयामासेति भावार्थः ॥ ४९ ॥

विधाय शौरीपुरपुर्यथो यदू-

द्वहस्य यात्रामतिमात्रसंघभृत् ।

जिनप्रतिष्ठां प्रचकार पारणे

पुरेऽथ तत्रैव पवित्रदृग् गुरुः ॥ ५० ॥

अथो गुरुः, किं०, अतिमात्रसंघभृद् भूरितरसंघसंयुतः सन्, चतुर्मासकपारणे जाते सति शौर्यपुरे कुशावर्त्तदेशस्थे श्रीनेमिजन्मभूमौ यदूद्वहस्य नेमेः, यात्रां विधाय, पुनस्तत्राऽऽगत्य जिनप्रतिष्ठां श्रीचिंतामणिपार्श्वनाथप्रतिष्ठां, कृतवान् ॥ ५० ॥

उपेयिवांसोऽथ पुनः फतेपुरं

गुरुप्रबर्हाः स्वपरिच्छदान्विताः ।

तमो हरन्तः सुरराजदिक्शिलो-

च्चयोच्चमूर्धानमिवाब्जबन्धवः ॥ ५१ ॥

अथोग्रसेनपुरात् पुनः गुरुप्रबर्हा गुरुमुख्याः, स्वपरिच्छदेन पूर्वोक्तपण्डितपरिकरेणाऽन्विताः, अब्जबन्धवः सूर्या इव तमो हरन्तः तमः पापं ध्वान्तं चेति हरन्तो दूरीकुर्वन्तः सन्तः, सुरराजदिक्शिलोच्चयोच्चमूर्धानं पूर्वपर्वतशृङ्गमिव, फतेपुरं शाहिनाऽलङ्कृतं सीकरीतिनामकं नगरं उपेयिवांसः प्राप्ता न्ति ॥ ५१ ॥

निशम्य सूरिं पुनरागतं पुरे

फतेपुरे द्राग् मिलनोत्सुकोऽच्छदृग् ।

बभूव भूपः सुकृताभिलाषुको

गुरुर्गरिष्ठोऽप्यजनिष्ट तन्मनाः ॥ ५२ ॥

तस्या वचनानि श्रुत्वा हर्षितो नलः स्वपटप्रान्तं छित्वा दम-यन्त्याः पादे पट्टबन्धं व्यधात् । अहो ! महदाश्चर्यम् ।

यथा—

"पट्टबन्धः पुरा मूर्धन्यभूद् भैम्यास्तदा पुनः ।
नलेन पादयोश्चक्रे दारं दारं स्वमंशुकम्" ॥ १ ॥

एवं तावुभावपि वार्तां कुर्वन्तौ मार्गे संचेरतुः । अग्रे एकं महत् सरो दृष्टम् । तत्रोभावपि स्नात्वा शीतलं पयः पीत्वा एकस्य तरोस्तले पथश्रान्तौ सुषुपतुः । तत्र सुखसुप्ता भैमी नलं बभाषे—हे आर्यपुत्र ! यावत्ते ग्रहबलं साऽनुकूलं न, इदं च व्यसनं दुनोति, तावत्त्वं श्वशुरकुलमलङ्कुरुष्व । यदि मयि प्रसादं विधातुमिच्छसि, तर्हि भीमभूपालगृहाभिमुखो भव, इति कथमपि भीमपुत्र्या रतिसमये प्रार्थ्यमानो नलो विमलकुलोत्पन्नो नृपतिलकः सपदि त्रपामवाप । स नलो दमयन्त्या समं तन्निशामुखे कुशपत्रस्रस्तरमशिश्रियत् । अथाऽस्ताचलशिरःसीम्नि कमलिनीपतिरर्धबिम्बतां प्राप । ततस्तिमिरनिकरेण प्लाविते सकले विश्वे पक्षिगणो महीरुहां शिखराण्यारोहन्ति स्म । लोका अचक्षुर्विषयाऽऽलोकाश्चतुरिन्द्रिया इव बभूवुः। भैम्या सह सुप्तो नलश्चिन्तयति—अहो ! मया संप्रति क्व गन्तव्यम् ?, मया दिनाः कथं निर्गमनीयाः ?। निश्चितं धनहीनानां नृणां न साध्यम्, न च साधनं किमप्यस्ति ।

यतः—

"हसन्ति दुर्जनाः स्वैरमङ्गीकुर्वन्ति वैरिणः ।
सहायाश्च विमुञ्चन्ति नरं धनविवर्जितम्" ॥ १ ॥

अथ किं मम जीवितेन ?। सांप्रतं छलज्ञा मम शत्रवो मामेकाकिनं हत्वा भैमीं समादाय स्वस्थानं यास्यन्ति, तदा मम लोकापवादो भविष्यति। अहो ! शत्रुभिर्नलं हत्वा भैमी समानी-

ता इति हास्यं लोके स्यात्। अतो भैमीं कुत्रापि मुक्त्वाऽहं देशान्तरं यामि, अथवा शत्रुसंघातं विनाऽपि भीमजा मार्गे मम दुःसहा। अस्याः सुकुमाराङ्ग्या दुःखमीक्षितुमहं क्षमो न भवामि। यत इयं पथि श्रान्ताऽपि मम शुश्रूषां न मुञ्चति, पुनरेषा मां त्यक्त्वा पितृगृहं प्रहिताऽपि न याति, अस्याः पितृगृहे गन्तुं स्पृहाऽपि नास्ति। पूर्वं चतुरङ्गिण्या सेनया सहितो भैमीं परिणेतुं गतोऽभवम्, अथात्मानमीदृशावस्थं संप्रति कथं दर्शयिष्यामि ?। कदर्याणां नृणां श्वशुरावासवासिनां पितृनाम्ना समं महत्त्वं याति।

यतः—

"उत्तमोऽमुक इत्युक्तोऽमुकसूरिति मध्यमः।
जामेय इत्यप्यधमो जामातेयोऽधमाधमः" ॥ १ ॥

इयं कदाचित् पितृगृहं याति तदा मम किमपि चिन्ता न स्यात्, तर्हि एनां कुत्रापि मुक्त्वा पश्चात् स्वस्थचित्तो यत्र कुत्रापि यस्य कस्यचित् सन्निधौ यथा तथा कालं निर्गमयाम्यहम्। यद्येषा स्वस्थानं प्राप्ता भवति, तदा मम कश्चिदपि शत्रुभ्यः पराभवो न स्यात्, तर्हि एनां केनाप्युपायेन वने त्यजामि; यथैषा एकाकिनी पितृगृहं यास्यति। इयं सर्वथैव मया अनिर्वाह्या, मम समीपे न घटते, क्लीबस्य करेऽसिपत्रिकेव। तत् कपटेन वञ्चयित्वा परिहरामि। अथ सुप्ता दमयन्ती समीपस्था चलच्चित्तं तं दृष्ट्वा विरहविधुरा इङ्गितज्ञा इङ्गितैर्ज्ञात्वा चिन्तयति—नूनमेष नलो मां हित्वा यास्यति। तथा मे दक्षिणं चक्षुर्वारं वारं प्रस्फुरति, तेनाहं जानामि मम सर्वथा दयितविरहो भावी। हा हा! हतास्मि, किं करिष्यामि दयितं विना ?। एवं सापि चलच्चित्ता शयने सुष्वाप। तां व्याकुलां दयितां दृष्ट्वा नलो बभाषे—हे प्रिये! अहं नलस्त्वां सुखसुप्तां मुक्त्वा कुत्रापि न यास्यामि, त्वं विश्वस्ता भव, शुचं मुञ्च, निद्रां

भज, जागरूकोऽहं तव रक्षां करिष्ये; इत्यादिवचनानि श्रुत्वा नलपरिधानांशुकमधो विस्तार्य तदुपरि सुप्ता निद्रां चकार। नलोऽपि तस्याः समीपे सुखं सुष्वाप। उभावपि तत्रस्थौ शुशुभाते।

यथा—

"अथ तन्मिथुनं रेजे दुकूलवलयस्थितम्।
एकशम्बासमुत्पन्नमिव मुक्ताफलद्वयम्" ॥ १ ॥

तयोः सुखसुप्तयोर्भैमीभालस्थलविशेषकशिखित्विषस्तिमिरं जर्जरीचक्रुः। पुनर्नलश्चिन्तयति—भैमीं परिहरामि, अहं कथं परिहरामि ?। एनां पथश्रान्तां सुखसुप्तां दीनाननां विश्वस्तां सुकुलोत्पन्नां चन्द्राननां भीमतनयां परित्यजतो मम लोकापवादो भविष्यति। पुनश्चिन्तयति—लोकापवादाद् भीतेन किम् ?। द्यूतावेशवशेन यथा राज्यं गतं, लक्ष्मीर्गता, रथोऽपि गतः, तथा भैम्यपि गतेति निश्चित्य कटितटात् क्षुरिकां समाकृष्याऽधस्तनपटं प्रेमपाशेन साकं छित्त्वा दमयन्त्याः पटप्रान्ते निजरुधिरेणेमामक्षरावलीं लिलेख।

यथा—

"वामतोऽयं वटेनाऽध्वा विदर्भामुपतिष्ठते।
दक्षिणेन पुनः स्मेरैः किंशुकैः कोशलां पुरीम् ॥ १ ॥
देवि ! तत्र व्रजेद् यत्र कुत्रापि प्रतिभाति ते।
अहं तु न खलु क्वापि मुखं दर्शयितुं क्षमः" ॥ २ ॥

इति वर्णावलीं लिखित्वा सुप्तां भैमीं पश्यन् मन्दं मन्दं रुदन् वलिताननश्चचाल। दूरे गत्वा पुनः प्रत्यावृत्तो नलः सुखसुप्तां भैमीमालोक्य निर्भरं जगाद—रे ! दैव यदि त्वयेयं विहिता, तर्हि एतावतीं दीनामवस्थां कथं प्रापिता ?, अन्योऽपि स्वयमारोपितां बदरीमपि न छिनत्ति, तर्हि वाञ्छितार्थप्रदा-

यिनीं पुनः कल्पवल्लरीं को विद्वान् छिनत्ति ?। एषा तु कल्पवल्ली-तुल्या, ईदृशानि सुखानि दत्त्वा पुनरीदृगवस्थां कथं प्रापिता ?। इत्युक्त्वा नलस्तावद् गच्छति, यावद् दमयन्ती अदृश्यतामगात्। अहो ! मया किं कृतम् ? विश्वस्ता वने मुक्ता, अस्यां सुप्तायां वन्यसत्त्वोद्भवः कोऽप्युपद्रवो मा भूदित्यालोच्य पुनः प्रत्यावृत्तो वृक्षवल्ल्यन्तरितः सुखसुप्तां दयितां रक्षति, तां भूमिशायिनीं निरीक्ष्य नलश्चिन्तयति—

यथा—

"हा ! दुरात्मन् ! नल ! क्षिप्रं कथं यासि न भस्मसात् ?।
इत्याद्यालोचयत्यस्मिन् विरराम विभावरी" ॥ १ ॥

विभातायां विभावर्यां तमो दिगन्तेषु तुच्छत्वमगमत् । अथ स किं करोति ?, यावद् रविर्नोदेति, यावत् प्रिया न जागर्ति, तावद् नलः साश्रुनेत्रस्तं प्रदेशमुल्लङ्घयामास । अग्रे गच्छन् मार्गे धूमस्तोमसमन्वितं वनपावकमपश्यत् । तस्मिन् पावके दह्यमानेष्वनेकेषु जन्तुषु कश्चिद् मानुषभाषया गच्छन्तं नलं समभिलोक्य एवमवोचत् ।

यथा—

"ऐक्ष्वाक ! नलभूपाल ! जगत्यार्तैकबान्धव ! ।
दावाग्निदह्यमानाङ्गं महात्मन् ! रक्ष रक्ष माम्" ॥१॥

तां मनुष्यवाचां श्रुत्वा तदनुसारेण इतस्ततो विलोकयन् नलो वन्यवल्लीमध्यस्थं ज्वालापरिवेष्टितमेकं भुजङ्गमं ददर्श । नलराट् तं भुजङ्गेन्द्रं जगाद—भो भुजगेन्द्र ! त्वं मनुजभाषया इत्थं कथं ब्रूषे ?। अहिर्बभाषे—अहं पूर्वजन्मनि मनुष्योऽभवम्, तत्संस्कारादस्मिन्नपि भवे मम सरस्वती मानुषी। तथा ममावधि-ज्ञानमप्यस्ति, हे भूपते ! तेन ज्ञानेन विश्वं चराचरं करस्थमिव पश्यामि, तत् त्रायस्व महाराज !। महाऽग्निना वेष्टितोऽहम्, ममाऽ-

स्मिन् वने अन्यः कोऽपि त्वां विना रक्षको नास्ति, अतस्त्वं मां रक्ष रक्ष । अहमपि त्वां किमप्युपकारं करिष्ये । तदा नलेन करुणासागरेण स्वमुत्तरीयं वल्लिनिकुञ्जे क्षिप्तम्, स भोगी तदुत्तरीयं वपुषा संवेष्ट्य स्थितः, नलस्तदुत्तरीयं भुजगवेष्टितं समाचकर्ष । ततस्तं पन्नगेन्द्रं नीत्वा निरुपद्रवस्थाने कस्मिंश्चिद् वने यावद् मुमोच, तावत् तेन भुजगेन्द्रेण नलकरे दश्यते स्म । नलोऽपि तं सर्पं करमाच्छोट्य भूमितलेऽपातयत् । ततश्चोक्तम्—भो भुजगेन्द्र ! त्वयोक्तमहमप्युपकारं करिष्ये, भवता महोपकारः कृतो यदहं पाणौ दष्टः । यस्त्वज्जातीयेभ्यः क्षीरं पाययेत्, तैः स एव दश्यते । एषा तवोपकारिता । इत्याद्युक्ते सति तदीयविषवैभवतो राजा नलः कुब्जो जातः । तेन कुब्जत्वेन वामनवेषेण विडम्बितो नलो वैराग्यमापन्नो जीवितव्यादुद्विग्नो यावदभूत्, तावत् स पन्नगो दिव्यं देवरूपं विधायैवमवोचत्—हे भूपाल ! विषादं मा विधेहि, अहं तव पिता वीरसेननामा । तदा तपस्यामादायाऽत्युग्रं तपस्तप्त्वाऽन्तेऽनशनेन मासान्ते मृत्वा पञ्चमदेवलोके महर्द्धिकोऽहं देवोऽभवम् । अवधिज्ञानेन तवेदं व्यसनोदयं परिज्ञाय अहमत्र समागतः । एतत्सर्वं मम मायाविजृम्भितं तव विरूपादिविहितं तव रक्षायै । यतस्तव शत्रवोऽनेके वर्तन्ते, अनेन नलरूपेण त्वामुपलक्ष्य उपद्रवं करिष्यन्तीति भिया मया तव दिव्यानुभावतो विरूपं रूपं विहितम् । त्वं चिन्तां मा विधेहि, वैराग्याद् मरणाभिमुखः परिव्रज्याभिमुखो वा साम्प्रतं मा भव । हे वत्स ! यदा ते परिव्रज्यासमयो भविष्यति, तदाहं ज्ञापयिष्यामि, निमित्तज्ञ इव । अतस्त्वं स्वस्थो भव, इदं करण्डकं एकं च बिल्वफलं मदर्पितं गृहाण । एतद्द्वयं त्वं प्रयत्नतो रक्षेः, यदा तवात्मीयरूपकरणेच्छा भवेत्, तदा बिल्वफलं भित्त्वा दिव्यदुकूलानि समाकृषेः । तथाऽस्मात्करण्डकाद् हाराऽर्धहाराद्याभरणोत्करं समाकृष्य

परिधेयाः। तव तत्क्षणादेव दिव्यं नलरूपं भविष्यति। इत्युक्त्वा देवस्तद्द्वयं समर्प्य पुनः प्रोवाच—त्वं कियितस्ततो वने भ्राम्यसि? यत्र तवेच्छा वर्तते, तत्र क्षणेन त्वां नयामि, ब्रूहि। नलेनोक्तम्—हे तात! तर्हि त्वं मां सुंसुमारपुरे नय। देवेनोक्तम्-अहं त्वां राज्यादिकं ददामि, परं किं करोमि?, तव पूर्वकृतं कर्म केनाप्युल्लङ्घयितुं न क्षमम्; इत्युक्त्वा देवेन तदोत्पाट्य नलः सुंसुमारपुरद्वारे मुक्तः। स्वयं देवः स्वर्गं गतः। ततो नलो यावद् नगरीं प्रविशेत्, तावत्तस्यां नगर्यां कश्चिद् बहलः कोलाहलः समभवत्। पलायध्वं पलायध्वं इति सर्वे लोकाः प्रासादशिखरगवाक्षस्था बाढं पूत्कुर्वन्ति स्म। नलश्चिन्तयति—किमेते लोकाः पूत्कुर्वन्ति? एवं यावता चिन्तयति, तावदेकं गजमन्यगजभ्रान्त्या स्वच्छायायां प्रहारं कुर्वन्तम्, गगनगामिनं पक्षिसमूहं कराग्रेण गृह्णन्तम्, मठाट्टालशालाट्टमन्दिरादीनि पातयन्तम्, उद्यानकाननपादपान् भञ्जयन्तम्, प्राकारगोपुराद्यारूढपुरुषैर्वीक्षितम्, चकितैर्निरीक्षितं यमस्य सहोदरम्, द्रुमेभ्यो दत्तझम्पान् हस्तिपकान् हिंसन्तम्, बालस्त्रीवृद्धादीन् त्रासयन्तम्, फूत्कारसीकरासारकृतझञ्झासमीरणम्, सिन्दूरपूरपूरितशिरःकम्पनेन पिञ्जरीकृतदिगन्तरम्, सप्तश्रोतस्स्रवन्मदेन पङ्किलीकृतभूतलम्, सप्तकरोन्नतमेवंविधं गजेन्द्रं दृष्ट्वा नलेन चिन्तितम्—नूनमेतस्य भयात् सर्वे लोका इतस्ततः प्रणश्यन्ति, गजानुपदिकस्तन्नगराधीशो राजा दधिपर्णस्तुरङ्गारूढः सैन्यपरिवृतो बाढस्वरेणैवं भारतीं व्याजहार—भो लोकाः! कोऽप्येनं गजेन्द्रं वशमानयति तस्याऽहं मनोभीष्टां ग्रामपञ्चशतीं ददामि। एवं वारं वारं पूत्कुर्वन्तं भूपालं दृष्ट्वा गजेन्द्राभिमुखं कोऽपि गजं वशमानेतुं मरणभयाद् भीतो नायाति।

यतः—

'मरणसमं नत्थि भयं दारिद्दसमो य परिभवो नत्थि।

पन्थसमा नत्थि जरा खुहासमा वेअणा नत्थि " ॥ १ ॥

एवं वदति भूपाले यावत् कोऽपि नायाति, तावद् नलः कल्लोलितविक्रमः पादाभ्यां भुवमस्पृशन्निव गजाभिमुखो वेगादधावत्। तावल्लोको बभाषे—भोः कुब्जक! गजाभिमुखो मा याहि, एष गजस्तवान्तं करिष्यति। एवं बहुशो निषिद्धोऽपि नलः सिंहवद् गजाभिमुखो ययौ। तत्र गजसमीपे गत्वा गजं तर्जयन्नेवं बभाषे--रे रे मातङ्ग! मातङ्गवद् किं बालवृद्धग्लानतपस्विदुर्बलहिंसां करिष्यसि ?। यदि तव पराक्रमं भवति, तर्ह्येतान् सर्वान् लोकानुत्सृज्य ममाऽभिमुखो भव। तत् श्रुत्वा नलं प्रति धावितो गजः। नलेनापि लेष्टुयष्ट्यादिभिस्ताडितो भृशं चुकोप। अथ धावितो गजः क्रोधारुणलोचनः साक्षाद् विन्ध्याद्रिरिव महाकायो वातोद्धूतो नलसमं युयुधे। नलोऽपि कदाचिद् धावति,कदाचित् परितो भ्रमति, कदाचिद् लेष्टुभिस्ताडयति,कदाचिल्लुठति,कदाचित्स्वपिति, कदाचित् कठोरवचोभिस्तर्जयति, कदाचित् कराभ्यां दृढं पुच्छमादाय चक्रवद् भ्रमति। एवं नलो गजेन्द्रं खेदयित्वा जनानां कोलाहलेऽपि सुदृढमना निजोत्तरीयं कुण्डलीकृत्य गजपुरतः क्षिपति स्म। ततो गजः पुरुषभ्रान्त्या दन्ताभ्यां प्रहारं दातुं शिरोऽनामयत्, तावत् कुब्जस्तद्दन्तयोः पादौ दत्त्वा कुम्भिकुम्भस्थले समारुरोह। ततो नलो गजकण्ठवरत्रायां चरणौ प्रक्षिप्य करैः कुञ्जरकुम्भस्थलमास्फालयत्। तं गजेन्द्रं सान्त्वयामास। पश्चाद् गजरक्षाकारकैर्मेण्ठपुरुषैरुल्लोलितां सृणिं नलः समादाय गजेन्द्रमालानस्तम्भे समानयत्। तत्रालानस्तम्भे गजं बध्नता नलेन नगरलोकः सर्वोऽपि स्वस्थचित्तः कृतः। तं कुब्जरूपं नलं दृष्ट्वा सर्वोऽपि नागरिकलोको विस्मयविस्मेरमुखश्चिन्तयति।

यथा—

"मायाकुब्जसुरः कोऽपि किमेष भुवमागतः ?।

ऽऽऽऽ हस्तिमल्लस्य प्रतिमल्लमिमं वशे " ॥ १ ॥

राजाऽपि एतच्चरित्रं कुब्जस्य दृष्ट्वा मोहितो निजकण्ठाद् महामूल्यं रत्नावलीहारं समादाय कुब्जकण्ठे स्वयं निचिक्षेप। कुब्जपराक्रमं समालोक्य लोका वारं वारं प्रशंसन्ति स्म। राज्ञा दधिपर्णेनाऽऽहूतः कुब्जो राज्ञः समीपे वयस्यवदुपाविशत्। ततस्तुष्टो राट् तस्मै अलङ्कारान् दुकूलानि च परिधापयति स्म। ततो गरीयसा गौरवेण स्वान्तिके स्थापयामास, गुणवान् सर्वत्र पूज्यते।

यतः–

" गुणेष्वनादरं भ्रातः! पूर्णश्रीरपि मा कृथाः।
संपूर्णोऽपि घटः कूपे गुणच्छेदात् पतत्यधः ॥ १ ॥
गुणेष्वेवादरः कार्यः किमाटोपैः प्रयोजनम्?।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ॥ २ ॥
संधयेत् सरला सूची वक्रा छेदाय कर्तरी।
अतो विमुच्य वक्रत्वं गुणानेव समाश्रय " ॥ ३ ॥

अथ राजा दधिपर्णो गुणवन्तं गुणज्ञं कुब्जं ज्ञात्वा आत्मना सह गृहे निनाय। तं स्नापयित्वा सह भोजनं कारयित्वा ततः सर्वं राजा पृच्छति–भोः कुब्जक! तव विकलाङ्गस्यापि महापुरुषस्येव गजशिक्षाकलाकौशल्यं कुतः समागतम्?, त्वं कोऽसि?, कुत्र वास्तव्योऽसि?, त्वयि अन्याऽपि काचित्कला संभाव्यते। कुब्जको बभाषे–अहं नलस्य राज्ञो हुण्डिकनामा सूपकारोऽस्मि। मम जन्मभूः कोशला। मम स्वजनवर्गोऽपि सर्वस्तत्रैवाऽस्ति। नलस्याहं प्रेमपात्रमात्मतुल्यस्तेन कारणेन राज्ञा नलेन एषा गजशिक्षा ममाऽध्यापिता, तथाऽन्याऽपि सर्वा कला मयि न्यस्ता। पुना राज्ञा प्रोक्तम्–भोः कुब्जक! नलः सूर्यपाकां रसवतीं वेत्ति, त्वमपि तां रसवतीं जानासि?। तेनोक्तम्–सूर्यपाकां रसवतीमहमपि तस्यानुभावतो जानामि। दधिप-

र्णेन राज्ञा प्रोक्तम्—स नलः कुत्रास्ति ? । तेनोक्तम्—नलकूबरौ सर्वैर्वार्यमाणावपि दुरोदरं रेमाते । ततः सकलं पृथिव्यादिकं जित्वा कूबरेण निष्कासितो नलो दमयन्त्या समं निर्गत्य वने गतः । ततो न ज्ञायते मृतो वा, जीवति वा । अहमपि नलस्य प्रेमपात्रं मित्रम्, अतोऽहं मायिनं कूबरं त्यक्त्वा तव कीर्तिं श्रुत्वाऽत्राऽऽगतोऽस्मि । दधिपर्णो राजा तां नलकथां श्रुत्वा भृशं रुदंस्तस्य प्रेतकृत्यं चकार । ततस्त्रिदिनं गीतनृत्यवाद्यादि निषिध्य पुनरपि राजा तथैव नलमित्रकुब्जेन समं सुखं बुभुजे । अन्यदा दधिपर्णो राट् सूर्यपाकायां रसवत्यां कुतूहली हुण्डिकसूपकाराय शालिप्रमुखं भोज्यं सर्वं समार्पयत् । कुब्जोऽपि तद्भोज्यं स्थाल्यां निधाय आतपे धृत्वा सूर्यमन्त्रं सस्मार । तस्यानुभावतोऽशेषरसपेशलां दिव्यां रसवतीं कुब्जस्तत्क्षणादेव निर्ममे । तया रसवत्या कुब्जो राजानं सपरिकरं भोजयामास । ततस्तुष्टेन राज्ञा हुण्डिकाय पारितोषिकं वस्त्राभरणादिकं दत्त्वा तदुपरि लक्षमेकं सौवर्णस्य पञ्चशती ग्रामाणामपि दत्ता । हुण्डिकेन ग्रामान् विना स्वर्णादिकं सर्वमप्याददे । भूयोऽपि भूपेनोक्तम्—भोः कुब्जक ! यत्त्वं वाञ्छसि, तत्सर्वं ददामि । कुब्जकेनोक्तम्—राजेन्द्र ! यावतीं भुवं ते भुजादण्डः प्रशास्ति, तावत्यां भुवि द्यूतं मांसं मद्यं तथाचाऽऽखेटको निषिध्यताम्, एतदेव प्रार्थयामि । कुब्जप्रार्थितं राज्ञा सर्वं कृतं स्वदेशेषु । एवं तत्र दिनानि यान्ति कुब्जस्य । अथ दमयन्त्या वृत्तान्तो यथा—इतश्च यत्र रात्रौ नलेन दमयन्ती त्यक्ता तत्रस्थां प्रभातेऽपि दमयन्तीं सखीव निद्रा न तत्याज । अथ रात्रिपर्यन्ते दमयन्ती स्वप्नं ददर्श—यदहमेकं सहकारतरुं पत्रलं बद्धमञ्जरीकं सषट्पदं फलितमारूढा, तस्य फलानि यावद् गृह्णामि तावत्तत्र कश्चित् करीन्द्रः समागात्; तेन सहकारतरुर्मूलादुन्मूलितः, अहं ततो भुवस्तले पतिता । एवंविधं स्वप्नं लब्ध्वा

दमयन्ती जागरिता प्रियमदृष्ट्वा चिन्तयति स्म—कुत्र गतो मे प्राणेशः ? नूनं मदर्थं सलिलमानेतुं जलाश्रये गतः, अथवा शरीरशौचार्थं वनान्तरे गतः। एवं बहु विलोकितोऽपि नलो यदा नायाति स्म, तदा दमयन्त्या पुनश्चिन्तितम्—नूनमेष नलो रूपाहृतचित्तया कयाऽपि विद्याधर्या हृतः, अथवाऽन्याभिर्देवीभिर्हृतः ॥

यतः—

"रन्तुं विद्याधरी काचित् कापि वा वनदेवता ।
सुभगं तमथाऽहार्षीत् सोऽन्यथा न जहाति माम्" ॥१॥

अथवा हास्येन क्वापि वल्ल्यन्तरितो भविष्यति, तर्हि इत उत्थाय पश्यामि, ममाग्रे क्व यास्यति ? । इति विचिन्त्य समुत्थिता दमयन्ती इतस्ततो विलोकयन्ती प्रेमग्रथिला मार्गमहीरुहान् पृच्छति—भो महीमण्डना वृक्षसमूहाः ! भवद्भिर्दृष्टः कुत्रापि मम प्राणप्रियो नलः ? । इत्यादि वारं वारं महीरुहान् पृच्छन्ती वनं बभ्राम। तत एकं महावृक्षं समारुह्य गाढस्वरेण पूत्करोति स्म । हे प्राणेश ! एहि, तव विरहे मम हृदयं द्विधा भविष्यति, बहु हास्यं कुत्रापि शर्मदं न भवति। एवं बहून् वारान् कथयन्ती इतस्ततो भ्रान्त्वा पुनस्तत्राऽऽगता यत्र पूर्वं सुप्ताऽभूत्। तत्र स्थित्वा स्वप्नार्थो विचारितः ।

यथा—

"यश्चूतो मत्प्रियः सोऽयं राज्यं पुष्पफलादिकम् ।
तद्भोगश्च फलास्वादः षट्पदाश्च परिच्छदः ॥ १ ॥

मूलादुन्मूलनं यच्च चूतस्य वनदन्तिना ।
मदीयप्रेयसो राज्याद् भ्रंशनं कूबरेण तत् ॥ २ ॥

यच्चाहं पतिता चूतात् प्रियेण विरहः स मे ।
स्वप्नेनाऽमुना नूनं वल्लभो दुर्लभोऽधुना" ॥ ३ ॥

इत्याद्यालोच्य दुःखभारभराक्रान्ता नलप्रिया मूर्छामगमत्। क्षणं स्थित्वा वनमारुतेन प्राप्तचैतन्या सा दमयन्ती भृशं रुरोद। हा नाथ! तवाहं किं भारहेतवेऽभूवम्?, यतः स्थूले अपि निजे शृङ्गे वृषभस्य किं भाराय भवतः?। हा नाथ! हा निषधकुलोत्तंस! विवेकिनां सात्त्विकानामयं क्वापि पन्थाः केनापि दृष्टः? यदीदृशे वने पाणिगृहीती प्रिया त्यज्यते। अथवा मम कर्मविलसितं ह्येतत्, येन त्वं सुकुलोत्पन्न ईदृशे भयङ्करे वने एकाकिनीं दीनामनाथां मां मुक्त्वा गतः, यद्वा ज्ञातं द्यूतग्रहग्रस्तानां साहसिकशिरोमणीनां भवतां मतिविपर्यासोऽभूत्। एवं वारं वारं पूत्कुर्वती दमयन्ती वने पादपान् श्वापदानप्यरोदयत्। तदैवं विरहव्याकुला कथयति स्म।

यथा--

"राज्यभ्रंशस्य नो दुःखं प्रवासोऽपि न दुस्सहः।
अयं प्रियवियोगस्तु विधत्ते हृदयं द्विधा ॥ १ ॥
सायं वल्लभयुक्ताऽहं प्रातः प्रियविवर्जिता।
अहो! तादात्विकः कोऽपि विपाको दुष्टकर्मणाम्"॥२॥

एवं विलपन्ती दमयन्ती पट्टकूलाञ्चलेन यावता नयनजलमपाकरोति, तावता पट्टकूलाञ्चले शोणितेन नलनृपलिखितां वर्णपङ्क्तिं ददर्श। तां दृष्ट्वा दमयन्ती चिन्तयति स्म--नूनं नलो मां मुक्त्वा कुत्रापि देशान्तरे गतः, तर्हि नलशिक्षयाऽहमपि न्यग्रोधाध्वना पितुर्वेश्मनि व्रजामि, यतो नारीणां पतिं विना पितैव शरणम्। अतो पितुर्गृहे यामि। साऽपि प्रियादेशं कर्तुं दमयन्ती वटमार्गेण कुण्डिनं प्रति चचाल। हृदये दुःखाक्रान्ता पतिविरहाज्जीवितनिरपेक्षा मार्गे निःशङ्कैव ययौ। अग्रे गच्छन्त्यास्तस्या मार्गे सहसा पुरतः केशरी समागात्। तद्भालस्थलतिलकज्वालाताडित्ताण्डवडम्बरनिर्धाटितः केसरी निष्फलतामगात्। तस्या दमयन्त्या अनुभावतो मार्गे कोऽपि दुष्टः श्वापदजीवः पीडां

कर्तुं न शशाक । यथा—जाङ्गुलीमिव भोगीन्द्रा जानन्ति, वनद्विपास्तां सिंहीमिव मानयन्ति, व्याघ्रास्तां वह्निज्वालामिव दुरालोकां वीक्ष्य दुद्रुवुः । मार्गे सा चिन्तयति स्म—अहो ! मे प्रियस्यादेशं वहन्त्या जीवितं तिष्ठति, अथवा आशापाशनिबद्धं मे वक्षो द्विधा न भवति। एवं मार्गे वहन्त्यास्तस्याः सकलमपि दिनं गतम् । सायं पुष्पफलाहारान् विधाय रात्रावेकस्यां गिरेर्गुहायां निद्रां चकार । अथ तस्यां प्रसुप्तायां रविस्तद्दुःखमसहमानोऽस्तमियाय । पुनः सूर्यो दमयन्त्याः पन्थानं दर्शयितुकाम इवोदयाचलचूलामध्यास्ते स्म । ततोऽपि जागरिता देवान् गुरून्नमस्कृत्य पुनः कुण्डिनपुरमार्गे चचाल । एवं मार्गे यान्ती भैमी पुनः कस्यचिद् गिरेर्गुहायां रात्रौ सुष्वाप। एकदा रात्रौ सुखसुप्ता दमयन्ती अजगरेण ग्रस्ता जागरिता भृशं विह्वलाऽपि अजगरमुखमध्यस्था आनाभि यावद् ग्रस्ता चिन्तयति स्म—धिग् विधिम्, हे विधे ! राज्यं हृत्वा राज्याधिष्ठायिनं नलं च हृत्वा न सन्तुष्टः, अथ मां दीनामबलां हर्तुमिच्छसि ?। तदा तत्तुण्डकुहरात् सा तु तन्वी निर्गमं न लेभे, पङ्काद् गजवधूरिव । तस्मिन्नरकोपमे तस्य जठरे पतिता वक्त्रशेषाऽभवत् । ततः कण्ठगतप्राणा मृत्युमागतं ज्ञात्वा धर्मस्य शरणं विधायोच्चैश्चक्रन्द, तावत्तस्याः कण्ठगतप्राणाया आक्रन्दं श्रुत्वा कश्चिद् भिल्लनायकोऽतुलकरुणातरलितचेताः शीघ्रमागत्य प्राप्तराहुशरीरावस्थामिव मुखशेषां तां दृष्ट्वा तस्या एवाकर्षणाय पर्शुना तस्य पुच्छं चिच्छेद, यतो मर्मावित् पुच्छे बलं हि अजगराणाम्, पुच्छच्छेदे बलं याति । ततो भिल्लेनाऽजगरमुखाद् निष्काशिता तामक्षताङ्गीं समादाय जलाश्रये गत्वा स्नपयित्वा तस्या वपुः शुचीचकार । एवं तां स्वस्थां विधाय खर्जूरनालिकेरबीजपूरादिभिः सत्फलैर्भोजयित्वा विहिताचमनां तां ज्ञात्वा तस्याः पादौ कोमलकमलोपमौ करतलाभ्यां संवाहयामास ।

ततस्तस्या अङ्गचङ्गिमानं निरीक्ष्य भिल्लनायकः स्वकुलोचितां वाचमुवाच—हे सुभ्रु ! त्वमस्यामटव्यां कं शरणं करिष्यसि ?, अतस्तवोपकारिणं मां भजस्व ।

यथा—

"विविक्तोऽयं वनोद्देशः पद्मशय्या च कोमला ।
न विलम्बक्षमः कालः किं मन्दाक्ष्यं निषेव्यते ? ॥१॥
न चुकोप निजिह्माय न च प्रत्युत्तरं ददौ ।
श्रुत्वा तद्वचनं देवी हृदि त्वेवमचिन्तयत् ॥ २ ॥

अहह ! नलकलत्रं वीरसेनस्नुषाऽहं
जगति दमनजामिर्भीमभूपालपुत्री ।
किमपरमयि ! जाता पात्रमेवंविधानां
जयति तदिह कालः क्रूरता कर्मणां च" ॥ ३ ॥

अहो ! कर्मणां वैचित्र्यम्, यदनेन मदर्थमजगरो हतः, तन्मुखादहं रिरंसया कर्षिता । ततोऽसौ लम्पटः शबरः सर्वथा शोभनो नास्ति । अथ मौनावलम्बिनीं तां विलोक्य स्मरबाणव्यथापीडिताङ्गः शबरो बभाषे—हे मुग्धे ! त्वं किं मौनमालम्ब्य स्थिता निःश्वासैरेवोत्तरं विदधासि ? । अत्रैव वने त्वं मया सह निःशङ्कं रमस्व, मया सह क्रीडन्त्यास्तव किमपि दुःखावहं न भविष्यति । अथ भीमजाऽवोचत्—अहो महाभाग ! अस्मिन् महारौद्रे भीषणेभ्योऽपि भीषणेऽरण्ये भिल्लेष्वपि त्वमेव दयालुर्वर्तसे, येन त्वया ममेदं जीवितं दत्तम्, जीवितव्यादप्यधिकं किमस्ति ? यदहं तव ददामि । अहं तव परोपकारैकशिरोमणेः किं प्रत्युपकरोमि ? कमिव कथयामि ? ।

यथा—

"पितरं वा पितृव्यं वा भ्रातरं वा सहोदरम् ।
कमिव व्याहरामि त्वामेकयैव हि जिह्वया ?" ॥ १ ॥

हे महाभाग! धन्येभ्योऽपि ते धन्याः, ये त्वमिव परोपकारं कुर्वन्ति स्वार्थं विनैव धर्मबान्धवाः परदारपराङ्मुखाः, परं तान् धिक् ये परदारानभिलषन्ति।

यतः—

"निन्दामूलं घृणाहेतुर्मृत्युद्वारं त्रपास्पदम्।
तथापि मूढचित्तानां प्रीतये पारदारिकम्" ॥ १ ॥

अतो हे महन्! रक्ता वा विरक्ता वा महापुरुषैः परस्त्री सर्वथा त्याज्या। यतो "रक्ता हरति सर्वस्वं विरक्ता विषवल्लरी" हे महाभाग! इति हेतोः परस्त्री सर्वथा त्याज्या। इत्यादीनि दमयन्तीवचनानि निशम्य वनेचरो धार्ष्ट्यमालम्ब्य तां प्रत्युवाच--हे सुभ्रु! पापिनि पुरुषे कोऽयं धर्मोपदेशः?, वृक्षमूले सिक्तं जलं कियत् स्थिरं तिष्ठति?, तथैवैष तव धर्मोपदेशलेशो मम हृदये कियत्तिष्ठति?। मम हृदये इदं नरकादपि महद् दुःखम्, यत् त्वादृशं स्त्रीरत्नं मया कदापि नोपभुक्तम्। हे बाले! त्वं किं मह्यं पाप्मने नरकादिविभीषिकां दर्शयसि? इह मम त्वयि बलात्कारं कुर्वतः को निवारयितुं समर्थः?। एवं कामातुरो भिल्लनायको यावत् तदध्यवसायाद् न विरराम, किन्तु तां दमयन्तीं बलात्कारेण रन्तुं पाणिना करग्राहमकरोत्, तावद् दमयन्त्याः स्मृतमात्रोपगतेन पूर्वाराधितहरिदेवेन विद्युत्पाताद् भस्मराशीकृतः पल्लीशो नरकस्याऽतिथिर्जातः। स देवो पल्लीपतिं शिक्षयित्वा स्वस्थानं गतः। सा दमयन्ती चिन्तयति—अहो! मम कर्मवैचित्र्यम्, यः कोऽपि संप्रति ममोपकारं करोति, सोऽपि वराको देवतया हन्यते। एवं शोकं कुर्वती दमयन्ती पुनरपि मार्गे संचचार। सा मार्गे संचरन्ती रात्रौ पथश्रान्ताऽपि निद्रां न करोति, यतो निद्रातो मम पत्युर्वियोगोऽभूत्, तथा निद्रातोऽजगरेणापि गलिता, तस्माद् रात्रौ गिरेर्गुहायां स्थिता पञ्चानां परमेष्ठिनां मन्त्रं हृदये वारं वारं सस्मार। नमस्कारमन्त्रानु-

भावतः शीलानुभावतश्च तस्याः कोऽपि किमपि कर्तुं न शक्नोति स्म। व्याघ्रसिंहश्वापदादयो विरूपं नाचरन्ति स्म। तस्या हृद्येकं महद् दुःखं वर्तते--यद् मदर्थं मृतो वराको वनेचरः। इत्थं पथि गच्छन्त्याः कियत्यपि काले धनपूर्णस्य वणिक्सार्थवाहस्य संगमो बभूव। सा दमयन्ती तेन सार्थवाहेन समं मार्गे विचरन्ती रात्रौ दुरारोहे विकटतटोद्देशे संतस्थे। तस्यां च रात्रौ सुप्तेषु सकलसार्थलोकेषु जनतागन्धात् क्रोधान्धो वनसिन्धुरो न्यपतत्। तेन गजेन्द्रेण गजयूथसहितेन चूर्णितानि वस्तुभाण्डानि, भग्नानि भाजनानि, तदा त्रस्ताः केऽपि मनुष्याः, मृताः केऽपि मनुष्याः। एवं वृषा अपि सर्वे नंष्ट्वा दिशोदिशं जग्मुः। पुनस्तथैव एकाकिनी वनदेवतेवेतस्ततो भ्रान्त्वा एकस्य तरोरधो विशश्राम। ततः सा दमयन्ती खेदखिन्ना चिन्तयति स्म--अहो! भाग्यविपर्यासः, येन समं मार्गे गच्छामि तस्यापि कुशलं नास्त्येव। एवं चिन्तयन्ती भैमी समुत्थाय खिन्नापि सत्त्वमवलम्ब्य शनैः शनैर्गिरिशृङ्गमयं मार्गमारुरोह। मार्गखिन्ना निराशा व्यग्रा कर्मवशा श्रान्ता भीता त्रस्ताङ्गी, एवंविधा सा सुन्दरी क्वापि रतिं न लेभे। अग्रे यान्ती भैमी मार्गेऽशोकवृक्षतले मुनीनां चारणश्रमणानां वृन्दं ददर्श। तेषां मुनीनां श्लक्ष्णसूक्ष्मप्रावरणानां समीपे गता दमयन्ती अनुजानीहि मां भगवन्! इत्युक्त्वा सा तन्मध्यगतं धीरं महौजसं धर्मघोषाभिधानं महामुनिं प्रणनाम। मुनिनोक्तम्--भो भद्रे! तव धर्मलाभोऽस्तु, हे कल्याणि! इतः पश्य--एते चारणश्रमणाः साधवो वैताढ्यपर्वतादेत्य तीर्थं वन्दितुं समागताः। एतत्तीर्थं भाविश्रीशान्तिनाथषोडशजिनस्य देवासुरैर्नमस्कृतं मुक्तिद्वारं नाम्ना महातीर्थम्। त्वं एकाकिनी अत्र वने कथं समागता?, इदं तीर्थं प्रायो भूगोचराणामगम्यम्, अज्ञातः कोऽप्यत्रागन्तुं न शक्नोति। हे सुकुमाराङ्गि! हे मुग्धे! त्वामविधवामेकाकिनीं वीक्ष्य मम

महान् विस्मयो जातः, त्वं देवकन्या न, नैव लक्ष्मीः, नैव सावित्री, नैवेन्द्राणी, नैव पार्वती, मेषोन्मेषस्तव चक्षुषि यतो वर्तते। त्वं काऽसि?, कस्याऽसि प्रिया?, केन हेतुना वने एकाकिनी दीनानना विचरसि?, एतत् सर्वं मम समाख्याहि। भगवन्! अहं दुर्दशापतिताऽपि भाग्यवत्यस्मि, यद् मयाऽस्मिन् भीषणे वने भवतो दर्शनं प्राप्तम्। तथापि मम वृत्तान्तं शृणु--अयोध्यायां नगर्यां वीरसेनो नरेश्वरोऽस्ति। तत्पुत्रः शत्रुकालानलो नलो नाम राजा द्यूते हारितसर्वस्वो भ्रात्रा कुबरेण समं क्रीडंस्ततः कूबरेण निर्विषयीकृतो दमयन्त्यभिधानया पत्न्या मया समं देशान्तरे गतः। एकस्यामटव्यां मां सुप्तां मुक्त्वा निष्करुणो न ज्ञायते कुत्र गतः?, मां अनाथां परित्यज्य तथा गतो यथा भूयो न वीक्षितः। ततोऽहं नलमार्गं विलोकयन्ती क्वापि वनगिरिगह्वरे सुप्ता, तत्राऽप्यजगरेण गिलिता एकेन भिल्लेन मोचिता। ततोऽहं सार्थेन सह मिलिता, सोऽपि सार्थो वनदन्तिना पीडितः। ततोऽप्यहं निर्गता दक्षिणाधिपतेर्भीमराज्ञो मम पितुर्गृहे यान्त्यस्मि। अत्र श्रीशान्तिनाथप्रासादे समागता यूयं मिलिताः। मया यूयं वन्दिताः। एष मे वृत्तान्तः। मुनिनोक्तम्--हे धर्मशीले! तव शीलमाहात्म्यतः सर्वे उपद्रवा दूरे यास्यन्ति। इत्युक्त्वा स तैश्चारणमुनिभिर्युतस्तपोलब्ध्या गगनमार्गेण स्वस्थानं गतः। अथ दमयन्ती मार्गे संचरन्ती यावता कतिपयभुवं गता, तावन्मार्गे पुनरपि कश्चित् सार्थो मिलितः, तत्र सार्थेन साकं संतुष्टमना यावत् कतिपयभुवं गता, तावत् स सार्थो भिल्लसेनयाऽरोधि। ततः सार्थाधिपतेः सुभटा भिल्लसेनया समं द्वन्द्वयुद्धेन युयुधिरे। एवं परस्परं युद्धं दृष्ट्वा भैमी सार्थपतिसेवकान् भग्नप्रायानालोक्याऽग्रे भूत्वा सिंहीव हुङ्कारानकरोत्। तस्य शीलानुभावतो मुनिवचनाच्च ते भिल्लनायकाः सर्वे पलाय्य स्वस्थानं जग्मुः। तं भैम्याः पराक्रमं विलोक्य सार्थपति-

स्तां दमयन्तीं प्रोचे—हे कल्याणि! त्वं महिमैकभूः काऽसि ?, अस्मिन्निर्जने वने एकाकिनी त्वं किमितस्ततो भ्राम्यसि ?। तया दमयन्त्या सार्थपत्यग्रे यथार्थमुक्तम्—अथाहं कुण्डिनपुरं प्रति मार्गे यामि, तत्र मे जनको भीमराड् भीमपराक्रमो वर्तते, तस्याहं पुत्री, अतस्तत्र यामि; मार्गे त्वं मां मिलितो मया शीलमाहात्म्याद् हुङ्कारमात्रेण तव सार्थो रक्षितः। तेनोक्तम्—अहं वसन्तसार्थवाहोऽस्मि, तव भर्तुर्नलभूपतेः सेवकोऽहम्; अथाहं तव रक्षां करिष्ये, यतस्त्वं ममोपकारिणी सार्थरक्षणाद्, नलपत्नीत्वाच्च त्वं मम पूज्या मान्या च, इत्युक्त्वा वसन्तसार्थवाहेन भैमी निजां पटकुटीं निन्ये, सार्थवाहो भैम्या भक्तिं करोति स्म।

यथा—

"स्नानभुक्त्यादिना तत्र गतश्रान्तिमधारयत्।
स तैस्तैरुपचारैस्तामाराध्यन् देवतामिव" ॥ १ ॥

अथ तत्र स्थिता कतिचिद्दिनानि, तदा वने वने जनेभ्यः शिखण्डिनां नृत्यं दर्शयन्ती प्रावृट् प्रववृते। त्रिरात्रिं यावत् मुशलधाराभिर्विरामरहितो मेघो पुष्करावर्त्तकोपमो वर्षितुं प्रवृत्तः। तद्वर्षाप्रान्ते दिनत्रयानन्तरं भैमी मार्गभङ्गभयात् कालक्षेपं ज्ञात्वा केनाऽप्यविज्ञाता वृष्टिपर्यन्ते निर्ययौ। मार्गे यान्ती नलप्रिया महाश्याममञ्जनगिरिसोदरं नरास्थिभूषणं दंष्ट्राकरालं कर्त्तिकाकरं भैमी कञ्चित् राक्षसमैक्षिष्ट। स राक्षसो भीतितरलेक्षणां भैमीं बभाषे— हे बालिके! त्वं क्व यासि ?, तिष्ठ तिष्ठ सप्तदिनबुभुक्षितेन मया त्वं लब्धा, अथाऽहं त्वां भक्षयिष्यामि। तत् श्रुत्वा भीता दमयन्ती सत्त्वमालम्ब्य राक्षसं प्रति जगाद—भो भद्र! त्वं मां मा स्पृश, त्वं मां स्पृशन्नेव भस्मसाद् भविष्यसि, सतीशापात् क्षयं यास्यसि; यदि कल्याणं काङ्क्षसि तर्हि इतो याहि। तां सतीं ज्ञात्वा भीतः पलादो भैमीं बभाषे—

हे भद्रे ! तव शीलेन सत्त्वेन च तुष्टोऽहम्, यद् रोचते तद् याचस्व ।

> " यदि तुष्टोऽसि भद्र ! त्वं राक्षस ! व्यन्तरेश्वर ! ।
> तदा ब्रूहि कदा भावी पत्या मम समागमः ? ॥ १ ॥
> विलोक्याऽवधिना सद्यस्तामवोचद् निशाचरः ।
> अतिक्रम्य परित्यागदिनाद् द्वादशहायनीम् " ॥ २ ॥

तथा तव पितृगृहे पत्या सह समागमो भविष्यति । यदि त्वमादिशसि तर्हि क्षणेन तत्राहं त्वां नयामि । देवी भैम्यूचे-भो देवराज ! इह जगति तव किमसाध्यमस्ति ? , परमहं परपुरुषैः सार्धं क्वचिद् नैव व्रजामि। तद्भैम्या वचनं श्रुत्वा देवो दिव्यरूपं विधाय भैम्याः शिरस्युपरि पुष्पवृष्टिं विरचय्य भैमीं स्तुत्वा नत्वा च स्वस्थानमगमत्। द्वादशवर्षान्ते पतिसंगमं विज्ञाय भैमी सतीव्रतोत्तंसा इमानभिग्रहानग्रहीत् । तद्यथा--रक्तवासांसि, ताम्बूलं, कुसुमानि, आभरणानि, विकृतीश्च प्रियदर्शनादर्वागहं न ग्रहीष्ये । ततश्चलिता दमयन्ती एकाकिनी पुण्यसहाया कस्याचिद् गिरेश्चेतःस्वास्थ्यकरीं कन्दरां प्राप । तस्यां गुहायां वर्षाकालं निर्गमयितुं दमयन्ती अवस्थानं चकार। तत्रस्था दमयन्ती पुण्योपदेशस्मृत्या मृन्मयीमेकां श्रीशान्तेः भाविषोडशजिनस्य प्रतिमां कृत्वा नमस्कारत्रयेण संस्थाप्य गुहायाः कोणे न्यवीविशत् । ततः सा दमयन्ती प्रतिवासरं वर्यपुष्पैस्तां जिनप्रतिमां स्वयमार्चयत्।एवं धर्मध्यानपरायणा तस्यां गुहायां वासरान् निर्गमयामास । यावदहं स्वदृष्ट्या नलं न विलोकयामि, तावदहं चतुर्थान्तःपारणं न करोमि, इत्यभिग्रहं गृहीत्वा चतुर्थषष्ठाष्टमाद्यनेकतपः कुर्वाणा गलितपतितपुष्पफलाहारैः पारणं वितन्वानैकाकिनी निर्भीका परमेष्ठिमहामन्त्रस्मरणपरायणा कालमत्यगात् । अथ वसन्तसार्थपतिस्तां भैमीं तत्राऽपश्यन्नितस्ततः सार्थमध्ये सर्वत्र विलोकयन् तस्या अनुपदि-

कस्तां कन्दरां समागात् । तत्र कन्दरान्तः समभिलोकयन् श्रीमच्छान्तिजिनमूर्त्तेः पूजां कुर्वतीं नलदयितां ददर्श । नलदयिताऽपि सार्थपतेः कुसुमादि समर्प्य शान्तिजिनपतेः पूजां कारयति स्म। ततः स्वागतप्रश्नपूर्वकं सार्थपतिमवार्तयत् । वसन्तः प्रोचे—हे दमयन्ति ! कस्य देवस्यैषा मूर्तिस्त्वयाऽर्च्यते ?। साऽपि भाविश्रीशान्तिजिनपतेः षोडशस्येत्यचीकथत् । तयोर्वाचं समाकर्ण्य तद्गिरेः समीपस्थास्तापसास्तत्र समाजग्मुः । ततः सा दमयन्ती तेषां तापसानां वसन्तसार्थपतेश्च विचित्रमार्हतं धर्मं समाख्यत् । यथा—

"त्रैकाल्यं जिनवन्दनं प्रतिदिनं सङ्घस्य संमाननं
स्वाध्यायो गुरुसेवनं च विधिना दानं तथाऽऽवश्यकम् ।
शक्त्या च व्रतपालनं वरतपो ज्ञानस्य पाठस्तथा
सैष श्रावकपुङ्गवस्य कथितो धर्मो जिनेन्द्रागमे ॥ १ ॥
जन्तूनामवनं जिनेशमहनं भक्त्याऽऽगमाऽऽकर्णनं
साधूनां नमनं मदापनयनं सम्यग् गुरोर्माननम् ।
मायाया हननं क्रुधश्च शमनं लोभद्रुमोन्मूलनं
चेतःशोधनमिन्द्रियाश्वदमनमेतच्छिवोपायनम् ॥ २ ॥
देवोऽर्हन् सद्गुरुः साधुर्धर्मः श्रीजिनभाषितः ।
सर्वजीवदयामूलः सैष धर्मः सनातनः ॥ ३ ॥
धर्मो जगतः सारः सर्वसुखानां प्रधानहेतुत्वात् ।
तस्योत्पत्तिर्मनुजात् सारं तेनैव मानुष्यम् " ॥ ४ ॥

भो भविकाः ! एवंविधं सारं मानुष्यमवाप्य धर्मे यत्नो विधेयः। एतद्धर्मं श्रुत्वा हर्षितः सार्थपतिः, हर्षिताः सर्वे तापसास्तं दमयन्त्योक्तं जैनं धर्मं वारं वारं यावत् प्रशशंसुः, तावद् नभसि धाराधोरणीभिर्मेघो वर्षितुमारेभे। विद्युद्वलयिगर्जारवैर्मुखरितदिगन्तो मेघस्तान् तापसान् धाराभिः सिञ्चन् विद्रावयायास ।

ततस्ते तापसा मेघधाराऽभिद्रुता इतस्ततः पलाययामासुः। तान् पलायमानान् ज्ञात्वा करे दण्डं धृत्वा भैमी तान् परितो यष्ट्या कुण्डमकरोत्। कृत्वा कुण्डमेवमवोचत्-यद्यहं परमार्हत्यस्मि, यद्यहं शीलवत्यस्मि, तर्हि अस्मिन् दण्डकृते कुण्डे वर्षा मा वर्षतु। तत् तथैव दृष्ट्वा ते तापसा विस्मिता दमयन्त्याख्यातं जैनं धर्मं प्रपेदिरे। स वसन्तसार्थवाहोऽपि श्रावकोऽभूत्। तेन सार्थवाहेन तत्र भाविजिनश्रीशान्तिनाथस्य चैत्यं कारितम्। तत्र चैत्ये सार्थलोकाः सर्वे पूजां कुर्वन्ति स्म; ते तापसाः पञ्चशतसंख्या दमयन्त्या वचसा प्रतिबुद्धास्तत्र वने निवसन्ति स्म। तत्र सार्थवाहेन नगरं वासितम्। अथ तापसा यतोऽस्मिन्नगरे प्रतिबुद्धास्ततस्तद् नगरं तापसपुरमिति पृथिव्यां पप्रथे। सर्वे सार्थलोका अपि तत्र गृहाणि कृत्वा स्वजनैः सह सुखं रेमिरे। एवमुच्चावचाः प्रजाः सर्वा गृहाणि कृत्वा सुखं विहरन्ति स्म। परं तन्नगरवासिनो लोकाः प्रायशोऽर्हद्धर्मपरायणा बभूवुः। एवं काले याति सति एकस्यां रात्रौ द्विप्रहरसमये तस्यैवाऽद्रेः शिरसि जितमार्तण्डमण्डलानुकार्युद्द्योतो नलकान्तया ऐक्ष्यत। तदनु तत्रैव नगे देवासुरा नभश्चरा उत्पतन्त आपतन्तो नलकान्तया विस्मयस्मेराननया ऐक्ष्यन्त। तत्संपातसमुत्पन्नैः कोलाहलैर्जागरिताः प्रजाः सविस्मया गिरिशिखरमारुरुहुः। एवं नलप्रियाऽपि गिरिशिखरं समारुरोह। तापसाश्च सर्वेऽपि तं गिरिं समारुरुहुः। सिंहकेसरिणः साधोस्तदैवोत्पन्नकेवलस्य देवैर्महिमानं क्रियमाणं देवोद्द्योते सति सर्वे ददृशुः। सुरकृतकनककमले निविष्टः केवली सर्वेषां जनानामार्हतं धर्ममाचख्यौ। ततस्ते भैमीसार्थवाहतापसप्रभृतयो लोकास्तत्र गत्वा धर्मं शृण्वन्ति स्म।

यथा—

भक्तिः श्रीवीतरागे भगवति करुणा प्राणिवर्गे समग्रे

दीनादिभ्यः प्रदानं श्रवणमनुदिनं श्रद्धया सुश्रुतीनाम् ।
पापापोहे समीहा भवभयमसमं मुक्तिमार्गानुरागः
सङ्गो निस्सङ्गचित्तैर्विषयविमुखता हर्म्यिणामेष धर्मः" ॥१॥

सम्यक्त्वमूलद्वादशव्रतरूपः श्राद्धधर्मः, पञ्चमहाव्रतादिरूपः साधुधर्मश्च, एवं द्वावपि धर्मौ केवलिनोक्तौ । तदानीं श्रीयशोभद्रसूरयः सिंहकेसरिकेवलिगुरवोऽपि च्छद्मस्थाः केवलिसमीपे स्थितास्तेऽपि धर्मं शृण्वन्तो विनयावनम्रा विहरन्ति स्म। देशनान्ते पुनः केवली प्राह-

"यदाऽऽख्यद् दमयन्तीयं धर्मतत्त्वमनुत्तरम् ।
तत्तथैव, न कर्त्तव्यः संशयोऽस्मिन् मनागपि" ॥ १ ॥

इयं परमार्हती, इयं धार्मिकी, इयं पूतवाक्; अस्याः शीलमाहात्म्यतस्तस्करा नाशं ययुः; अम्भोदवृष्टिः स्तम्भिता; राक्षसो वशमागतः। एते भावा भवद्भिः प्रत्यक्षमेव दृष्टाः, तस्मादियं महासती सर्वैरपि माननीया, याऽस्मिन् महावने व्याघ्रभिल्लचित्रकाकुले एकाकिनी गुहायां तिष्ठति। इत्यादि केवलिनो वचनं श्रुत्वा दमयन्त्या वचसि जातप्रत्ययः कुलपतिः केवलिनं नत्वा विमलमतिर्दीक्षां ययाचे । केवल्यूचे--एष यशोभद्रसूरिर्महामतिस्ते दीक्षां दास्यति, यतो ममाप्येष गुरुः। ततः कुलपतिर्विमलमतिः केवलिनं बभाषे--हे प्रभो! भवता बाल्ये वयसि कथं दीक्षा गृहीता? केवल्यूचे- श्रूयताम्, कोशलायां नलो राजाऽभवत्, यदीयाऽयं दमयन्ती दयिता तव धर्मदायिका। तस्य लघुबान्धवः कूबरो नाम, यः साम्प्रतं नलाद् द्यूते जितं राज्यं करोति; तस्याहं तनयः सिंहकेसरी नामा। सोऽहं संगीतपुराधीशस्य केसरिणः पुत्रीं बन्धुमतीं विवाह्य विहितविवाहमङ्गलः स्वां नगरीमयोध्यां प्रति प्रत्यावृत्तः। अस्मिन् वने यावताऽहं समागमम्, तावद् मम भाग्यत एष यशोभद्रसूरिर्मया ऽत्र वने दृष्टो वन्दितश्च । अनेन गुरुणा संसाराऽनित्यतामयी देशना दत्ता। देशनान्ते गुरवो मया पृष्टाः--भगवन्!

ममायुः कियदस्ति ?। अनेन ज्ञानवता श्रीयशोभद्रगुरुणा प्रोक्तम्-तवायुः पञ्च दिनानीति। तत् श्रुत्वा मरणभयाद् भीतोऽहम्, गुरुणोक्तम्--वत्स ! मा भैषीः, साम्प्रतं संयमव्रतमादत्स्व, एकदिनस्यापि संयमो मोक्षमादत्ते; यदि मोक्षं नाप्नोति तर्हि वैमानिकदेवत्वस्य तु कथनं नास्ति, तत्तु निश्चयेन भवत्येव।

यतः--

"[१]एगादिवसंपि जीवो पव्वज्जमुवागओ अणुन्नमणो।
जइवि न पावइ मोक्खं अवस्स वेमाणिओ होइ" ॥१॥

तद्गुरुवचनं श्रुत्वा बन्धुमतीं सपरिकरां त्यक्त्वाऽस्यैव गुरोः पार्श्वे मया व्रतं जगृहे। एतस्यादेशतोऽहमस्य गिरेः शृङ्गमारूढवान्, अद्यैवं पञ्चमं दिनम्, मयाऽद्य घातिकर्माणि निहत्य केवलज्ञानं प्राप्तम्। एवं वार्त्तां कुर्वन्नेव चतुर्दशं गुणस्थानमारूढः सन् मोक्षमाससाद। सुरास्तत्कायस्य पुण्यक्षेत्रेऽग्निसंस्कारं व्यधुः। अथ स कुलपतिर्विमलमतिः पञ्चशततापसपरिवृतो यशोभद्रगुर्वन्तिके व्रतमग्रहीत्। वैदर्भी व्रतं याचमानां गुरुरब्रवीत्--साम्प्रतं तव दीक्षा न युज्यते, यतस्तवाऽद्यापि भोगफलं वर्तते, त्वमद्यापि नलेन समं भोगान् भोक्ष्यसे। दमयन्त्या पृष्टम्--भो भगवन्! मया पूर्वभवे किमकार्यमकारि?; येन मे द्वादश वर्षाणि भर्तुर्विरहोऽभवत्। अथ नलदमयन्त्योः पूर्वभवानाह स्म--प्राग्भवे नलो राजा मम्मणनामा महीपतिरभूत्। हे दमयन्ति! त्वं वीरमतीनामा तस्यैव दयिताऽऽसीत्। युवाभ्यां मृगयाक्रीडावने गच्छद्भ्यां सार्थेन सह गच्छन्नेको मुनिर्दृष्टः। राज्ञा चिन्तितम्--एष मुनिः संमुखो मिलितस्तेनापशकुनं जातम्, ममाखेटको निष्फलो भविष्यति, इति भिया तं मुनिं स्वपत्तिभिः संग्राह्य ततः स्वगृहं प्रति प्रत्यावृत्तः। कथञ्चित् तं कोपाटोपं विस्मृत्य तं

---

१ एकदिवसमपि जीवः प्रव्रज्यामुपागतोऽनुन्नमनाः।
यद्यपि न प्राप्नोति मोक्षमवश्यं वैमानिको भवति ॥ १ ॥

मुनिमाकार्याऽवार्तयत्--भो मुने! त्वं कुत आगात्? क्व गन्तासि ?। मुनिनोक्तम्--अहं चम्पात आगाम्, तीर्थान्नमस्कर्तुं संमेते यास्यामि। तत् श्रुत्वा तौ दुःखितौ जातौ-अहो! अस्माभिः सार्थेन सह गच्छन् मुनी रुद्धः। ततो मुक्तः। तेन मुनिना तयोः श्राद्धधर्मो दत्तः। पुनः स साधुर्मम्मणराज्ञा सार्थेन सह मेलितः। यत् पूर्वं साधुर्द्वादश नाडिका युवाभ्यां रुद्धस्तेन युवयोर्द्वादश वर्षाणि विरहो जज्ञे। हे वैदर्भि! द्वादशवर्षान्ते नलेन सार्धं समागमो भविष्यति, पुनस्त्वं तादृशान्येव सुखानि भोक्ष्यसे। इति यशोभद्रगुरुगिरं श्रुत्वा हर्षिता दमयन्ती तस्यां गिरिगुहायां जिनोपास्तिपरायणा तत्र स्थिता दिनानि निर्गमयामास। अथ यशोभद्राभिधानो गुरुस्तद्गिरिशिरसः समुत्तीर्य तत्तापसपुरमलङ्करोति स्म। तत्र शान्तेश्चैत्यं प्रतिष्ठाप्य कोटिशः पौरलोकस्य देशनाजलैः संसिच्य कृषीबलवत् सम्यक्त्वव्रतबीजारोपणं चक्रे। भैम्यपि तस्यां गुहायां सप्तहायनीमतीयाय। अन्यदा कश्चित् पुमान् गुहाद्वारमभ्येत्य नलवल्लभामुवाच--हे वैदर्भि! त्वत्पतिर्मया नातिदूरदेशे ईक्षितः। मम सार्थो न प्रतीक्षते, अतोऽहं गन्तुमुत्सुकोऽस्मि, त्वं शीघ्रमेहि, अहं यामि; इत्युक्त्वा यावता स गतो दूरदेशं तावता तद्गुहातो निर्गता भैमी--तिष्ठ तिष्ठ भो भद्र! इति भाषिणी तं पान्थमनुधावन्ती पुनरपि भीषणे काननेऽपतत्। अहो! विधिश्चिन्तितादन्यत् करोति।

यतः—

"निदाघे संतप्तः प्रवरतरतृष्णातुरमनाः
सरः पूर्णं दृष्ट्वा त्वरितमुपयातः करिवरः।
तथा पङ्के मग्नस्तटनिकटवर्त्तिन्यपि यथा
न नीरं नो तीरं द्वयमपि विनष्टं विधिवशात्" ॥१॥

अथ भैम्यपि शून्ये कानने नलं गवेषयन्ती पुनस्तापसपुराभिमुखी यावच्चचाल, तावद् मार्गपरिभ्रष्टा महाकानने

वने पतिता चिन्तयति स्म--अहो ! दैवो रुष्टोऽद्यापि मम पृष्ठं न मुञ्चति, न ज्ञायतेऽथ किं करिष्यति ? इत्याकुलितमना भैमी अश्रुपूरप्लावितविलोचना मार्गे ययौ। इतस्ततः कानने भ्राम्यन्ती पुनः पुनर्मार्गे पतन्ती भूमौ लुठन्ती दैवोपालम्भान् ददती दमयन्ती मार्गे एकां निशाचरीमपश्यत्। ततः सा निशाचरी भैमीं बभाषे--हे बाले ! अहं क्षुधार्त्ता भवन्तीं भक्षयिष्यामि । तां राक्षसीं समभिलोक्य भयसंभ्रान्ता भीमनन्दनी ऊचे ।

यथा--

"ममाऽर्हन्नेव देवश्चेद् गुरवश्चेत् सुसाधवः ।
रतिश्चेज्जैनधर्मे च हताशा भव राक्षसि !" ॥ १ ॥

इति तस्या वचनं श्रुत्वा सा भैमीं नत्वा स्वस्थानमगमत्। एवं मार्गे यान्ती भैमी तृषाऽऽक्रान्ता एकां शुष्कां गिरिनदीं समभिलोक्य तृषाऽर्दिता एवमवोचत्--यद्यहं जैनी शीलालङ्कृता भवेयम्, तर्हि अस्यां नद्यां शीतं स्वादु अमृतोपमं जलं भवतु, इत्युक्त्वा दमयन्ती पार्ष्णिना महीतलमताडयत्। ततस्तस्यां शीतलं स्वादु जलं प्रादुर्बभूव। भैमी तत्र स्नानं कृत्वा पयः पीत्वा परिश्रमक्षयं निन्ये। एवं पुरो यान्ती भैमी पथि श्रान्ता एकस्य न्यग्रोधस्य तले निविष्टा केनचित् पथिकेन दृष्टा, पृष्टा च--भद्रे ! काऽसि त्वम्, केन हेतुना एकाकिनी अस्य वटस्याधो निविष्टा ?, वटवासिनी किं देव्यसि ?, किं वा मानुष्यसि ?। तयोक्तम्--नाहं देवी, किं तु अहं मानुषी वणिक्पुत्री पत्या समं पितुर्गृहे यान्ती केनापि हेतुना स मां सुप्तामेकाकिनीं वने त्यक्त्वा देशान्तरं गतः। ततोऽहमितस्ततो भ्रमन्ती मार्गे भ्रष्टाऽत्राऽस्मिन् वटे समागता; अथ त्वं मम धर्मबान्धवोऽधुना तापसपुरमार्गं दर्शय। तेनाऽध्वगेनोक्तम्--हे बाले ! यत्र सूर्योऽस्तमेति तत्र त्वं याहि; एष तापसपुरमार्गः, अनेन मार्गेण याहि, त्वं तापसपुरं प्राप्स्यसि। अहमुत्सुकस्तव मार्गं दर्शयितुं न समर्थः। भैम्योक्तम्--त्वं कुत-

आयातः ?। तेन पुरुषेणोक्तम्—अहं जलार्थी सार्थादागतोऽस्मि, यदि त्वमस्मत्सार्थे समायासि, तर्हि त्वां कुत्रापि वासस्थाने नेष्यामि। अथ सा दमयन्ती तेन सार्धं सार्थेऽगात्। तेन पथिकेन सार्थेशाय तस्याः सर्वः स पूर्वोक्तवृत्तान्तो निवेदितः। तं वृत्तान्तं श्रुत्वा सार्थवाहस्तां पुत्रीवत् संमान्य स्नानादिभिः सत्कृत्य रात्रौ तत्र स्थित्वा प्रभातसमये यानमारोप्य मार्गे संचरन्नचलपुरं प्राप। तत्राऽचलपुरद्वारे यानात् समुत्तार्यैनां मुमोच। अथ दमयन्ती मार्गश्रान्ता तृषाऽऽक्रान्ता पुरद्वारि वाप्यम्भसि स्नानं कर्तुं जलं पातुं मध्ये प्रविष्टा यावता स्नानं करोति स्म, तावत् तस्या वामपादाङ्गुष्ठो गोधया जगृहे। ततस्तस्याः करुणध्वनिं श्रुत्वा जलहारिण्यस्तां गोधां हक्कयामासुः। अथ दमयन्ती स्वस्थमनाः स्नानं कृत्वा जलं पीत्वा स्वेच्छया वाप्या बहिराययौ। इतश्च तस्मिन् नगरे ऋतुपर्णो राजा; चन्द्रोपमयशाश्चन्द्रयशा नाम तस्य पट्टराज्यस्ति। सा दमयन्तीमातृष्वसा। तस्या दास्यो जलार्थमागताः, तस्या भैम्या रूपं निरीक्ष्य मोहिता निजस्वामिन्यै चन्द्रयशसे कथयामासुः। ततश्चन्द्रयशा राज्ञी ता दासीः प्रेष्य दमयन्तीमानाययामास। दासीभिर्गत्वा प्रोक्तम्—हे शुभे! एहि, अस्मत्स्वामिनी चन्द्रयशास्त्वामाह्वयति पुत्रीप्रीत्या, पुनः पुनः कथयति—शीघ्रं समागच्छ, इत्युक्त्वा तां करे धृत्वा शान्तवचनैः समाश्वासिता। ततस्ताभिः परिवृता भैमी राजमन्दिराभिमुखी अचलत्। भैमी मार्गे चिन्तयति स्म—एषा चन्द्रयशा मम मातुःस्वसा वर्त्तते, परमेषा मां बाल्ये दृष्टामपि नोपलक्षयति; अज्ञातैव दासीभिः समं तत्रागात्। चन्द्रयशा राज्ञी भैमीं निरीक्ष्य सिंहासनात्समुत्थाय समायान्तीं संमुखमागत्य पुत्रीप्रेम्णा समालिलिङ्ग। साऽपि मातृस्नेहेन तस्या अंह्रिसरोरुहे शिरः प्रक्षिप्य पादौ प्रणनाम। हे वत्से! यथा मे पुत्री चन्द्रवत्यस्ति तथा त्वमपि मे धर्मपुत्र्यसि, अद्यप्रभृति मे गृहे उभे अपि लक्ष्मी-

सरस्वत्याविव सुखं क्रीडां कुर्वाताम्। पुनश्चन्द्रयशाः प्रोचे--हे पुत्रि! त्वमात्मस्वरूपं कथय। तयोक्तम्--अहं वणिक्पुत्री पत्या सह पितुर्गृहं यान्ती मार्गे मत्पतिर्मामेकाकिनीं सुप्तां मुक्त्वा देशान्तरं गतः। ततोऽहं ग्रामाद् ग्रामान्तरं भ्रान्त्वाऽत्रागता, तव दास्या इहानीता; साऽहम्। अथ चन्द्रयशा नगराद् बहिः सुकृतोद्धारे सत्रागारे दानं ददाति स्म। भैम्यूचे--हे मातः! तवाज्ञयाऽहं सत्रागारे दानं ददामि। ततो भैमी चन्द्रयशस आदेशात् सत्रागारे दीनादिभ्यो दानं ददाना विहरति स्म। भैमी अन्येद्युराहतडिण्डिममारक्षकैर्नीयमानं विकटबन्धनबद्धमेकं महाचौरमपश्यत्। चौरोऽपि भैमीं वीक्ष्य--रक्ष मां देवि! इति कृत्वा सत्रागाराग्रे निपतितः। भैम्यूचे--भोस्तलवर! अमुं चौरं मुञ्च मुञ्च। तलवरेणोक्तम्--अमुना चन्द्रवत्या रत्नकरण्डिका जह्रे, तेनैष राजादेशाद् विरसडिण्डिमवादनपूर्वकं वधभूमिकां नीयते। ततः साऽवोचत्--भो आरक्षक! एनं मुञ्च मुञ्च, अहं राज्ञ उत्तरं करिष्ये; इत्युक्तेऽपि यावत्स न मुञ्चति स्म तावत्सा सतीत्वश्रावणपूर्वकं त्रिभिरम्बुचुलुकैस्तमाच्छोटयत्। तत्सतीत्वानुभावतस्तस्य बन्धनानि झटिति तुत्रुटुः। ततः समस्तलोकानां महान् हर्षकोलाहलः संजज्ञे। तं कोलाहलं श्रुत्वा महीपतिस्तत्रागात्। तद्भैमीकौतुकं दृष्ट्वा हृष्टो राजा एवमुवाच--हे वत्से! क्षोणीभृतामेष धर्मः--शिष्टपालनं दुष्टनिग्रहश्च; एष चौरो दुष्टः, एष निग्रहार्हः, अतो मया निगृह्यते; राज्ञा निग्रहणार्हो निगृह्यते; अतो मां निग्रहं कुर्वन्तं मा निषेधय। हे तात! यदि मया दृष्टोऽप्यसौ दस्युर्विपद्येत तर्हि अर्हद्धर्मवेदिन्या मम केयं कृपालुता?। तस्या आग्रहं ज्ञात्वा राजा तं दस्युं मुमोच। महासत्यो भूमीभुजामपि माननीयाः। चौरो बभाषे--हे भैमि! जीवितदानात्त्वं मम माताऽसि, येन हेतुनाऽहं त्वया मोचितः। वैदर्भ्योक्तम्-त्वं कोऽसि?। तेनोक्तम्-वसन्तसार्थवाहस्याहं पिङ्गलनामा

दासोऽस्मि। मया कर्मवशतस्तस्यैव गृहे खात्रं दत्त्वा धनमपहृतम्;
हृत्वा धनं पलायितो मार्गे गच्छन् चौरैः सर्वं लुण्टितम्, लुण्टित-
सर्वस्वोऽहमत्रायातः; अत्र राजसेवां कुर्वाणो वारं वारं राजगृहान्तः
प्रविशन्नेकस्मिन् दिनेऽनिवारितो राजमन्दिरे राजपुत्र्या-
श्चन्द्रवत्या आभरणकरण्डकं संवीक्ष्य शून्यं दृष्ट्वाऽपाहार्षम्।
तं करण्डकं कक्षायां प्रक्षिपन् कथञ्चित् राज्ञा दृष्टः; ततोऽहं सेवकै-
र्ग्राहितः; तत् करण्डकं लात्वा मां वध्यमादिशत्। तत्पुम्भिर्नीय-
मानोऽहं त्वया स्वामिन्या मोचितः; अतो हे स्वामिनि! तवाहं
कथमनृणीभवामि?; यथा कादम्बिन्याः जीवलोकः कथमनृणी-
भवेत्?। अन्यच्च-हे देवि! यदा त्वं तापसपुरान्निर्गता तदा वसन्त-
सार्थवाहस्त्वामितस्ततो विलोक्य त्रीणि दिनानि दुःखार्तः
सुधीर्भुक्तिमत्यजत्, ततः श्रीयशोभद्रगुरुणा बोधितोऽन्यैर्जनैश्च
बोधितो बुभुजे। ततः स वसन्त उपायनमुपादाय कोशलाऽधिनाथं
कूबरं सिषेवे। बहुमणिमाणिक्योपायनैः संतुष्टश्छत्रचामरादि
दत्त्वा शिरसि तिलकं च कृत्वा छत्रचामरैर्लाञ्छितस्तन्नगर-
लोकैर्वाञ्छितो वसन्तश्रीशेखर इति विहितनामा निस्वाननिनादैः
पूरितदिगन्तो बन्दिजनैः स्तूयमानस्तेभ्यो दानं ददानः
स्वपुरमागात्। स वसन्तश्रीशेखरस्तत्पुरं पालयन् तत्र राज्यं
करोति; पुनस्तस्य चौरस्य भैम्योक्तम्–भो धर्मपुत्र! सांप्रतं
त्वं दीक्षां कक्षीकुरु, अथाऽऽत्मार्थं साधय। यदि त्वं विधिना
जीवन्मुक्तोऽसि, अतो धर्मं कुरु।

यतः—

"राज्यं सुसंपदो भोगाः कुले जन्म सुरूपता।
पाण्डित्यमायुरारोग्यं धर्मस्यैतत् फलं विदुः॥ १॥
धराऽन्तःस्थं तरोर्मूलमुच्छ्रयेणानुमीयते।
तथा पूर्वकृतो धर्मोऽप्यनुमीयेत संपदा॥ २॥
आरोग्यं सौभाग्यं धनाढ्यता नायकत्वमानन्दः।

कृतपुण्यस्य स्यादिह सदाजयो वाञ्छिताऽवाप्तिः " ॥३॥

इत्यादि भैमीमुखाद् धर्ममहिमानं श्रुत्वा स पिङ्गलचौरो मुनिसमीपे जैनीं दीक्षां ययाचे। मुनिनाऽपि तं योग्यं ज्ञात्वा जिनचैत्ये नीत्वा प्रव्राजितः। ततः सर्वेऽपि साधवोऽन्यत्र जग्मुः। भैमी तत्रैव सत्रागारे चन्द्रयशस आज्ञया दानं ददाना विहरति स्म।

यतः—

"संपत्तौ नियमः शक्तौ सहनं यौवने व्रतम्।
दारिद्र्ये दानमत्यल्पमतिलाभाय जायते ॥ १ ॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्त्तते।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति " ॥ २ ॥

एवं जानाना दमयन्ती सर्वेभ्यो दानं ददाति स्म। इतश्चैकस्मिन् दिने भीमेन राज्ञा कस्यापि समीपे श्रुतम्--नलकूबरयोर्द्यूतक्रीडा जाता, तस्मिन् द्यूते कूबरेण जितम्; नलेन सर्वं राज्यादि हारितम्। ततः कूबरेण देशान्नलो बहिष्कृतः, नलो भैमीं पुरस्कृत्य निर्गतः सन् वने भैमीं सुप्तामेकाकिनीं मुक्त्वा कुत्रापि गतः। एतत् सर्वं भीमेन राज्ञा श्रुतम्। ततो भीमेन राज्ञा स्वगृहदेवार्चको हरिमित्रो नाम तन्नलदमयन्तीशुद्धिकृते प्रेषितः। स इतस्ततो भ्राम्यन् अचलपुरे समागतः। तत्र भूमीपतिमृतुपर्णं नत्वा राज्याश्चन्द्रयशसोऽन्तिके गतः, तत्राशिषं दत्त्वा यावता पुरो निषण्णस्तावच्चन्द्रयशोराज्या पृष्टम्—मम भगिन्याः पुष्पदन्त्याः कुशलमस्ति?। हरिमित्रेणोक्तम्--राजराज्योः सनातनी क्षेमलक्ष्मीरस्ति। परं राजराज्योर्नलस्य भैम्याश्च चिन्ता वर्तते। चन्द्रयशोराज्योचे--नलदमयन्त्योः का चिन्ता?। हरिमित्रेणोक्तम्--श्रूयताम्—नलः कूबरेण समं द्यूते क्रीडितो हारितराज्यो भैमीं पुरस्कृत्य पुरान्निःसृतो भैमीमेकाकिनीं मुक्त्वा कुत्रापि गतो न ज्ञायते कुत्रास्ति ?। तयोः क्वापि कोऽपि वार्त्तामपि न क-

ोति। तयावात्ता श्रुत्वा राजराज्ञ्या मुमूर्छतुः। अस्मद्राज्ञा राज्ञ्या-
तद् दुःखं वर्तते। चन्द्रयशा अपि तत् श्रुत्वा भृशं रुरोद। हरि-
मेत्रेणोक्तम्--अहमपि तयोर्विलोकनाय भीमराजानुज्ञया देशान्त-
भ्रमन् प्रत्यरण्यं प्रतिग्रामं भ्रमन्नत्रागतोऽस्मि। परं तयोर्वार्त्ता-
ात्रमपि नाऽश्रौषम्। तेन मम इतस्ततो भ्रमणं केवलं क्लेशफल-
ावाभवत्। हरिमित्रमुखादेतन्नलदमयन्तीक्लेशवार्त्तां श्रुत्वा चन्द्र-
ाशा दुःखभारभराऽऽक्रान्ता भृशं रुरोद। अहो! नलेन किं कृतं?
त् सुप्तां दीनामेकाकिनीं दमयन्तीं वने मुक्त्वा क्वापि गतः; इत्या-
दि नलनिन्दां कुर्वतीं चन्द्रयशोराज्ञीं श्रुत्वा तत्सेवका अपि
थैव रोदनं कुर्वन्ति स्म। तान् सर्वराजलोकान् समभिलोक्य
ुभुक्षितो विप्रश्चन्द्रयशोराज्ञीं बभाषे--अहो! यूयं सर्वेऽपि नल-
ःखदुःखिता रोदनं कुरुध्वम्। अथाऽहं क्षुधितोऽस्मि। चन्द्र-
ाशोराज्ञ्यूचे--भो विप्र! त्वं दानशालां याहि, त्वं तत्र सत्रागारे
ोजनं लप्स्यसे। ततः स विप्रः क्षुत्क्षामकुक्षी राज्ञो मन्दिरा-
न्निर्गत्य भोजनाऽऽकाङ्क्षी तां दानशालां जगाम। तस्यां दानशा-
ायां तां भैमीं दानमानतत्परां प्रेक्ष्य उत्फुल्ललोचनो हरिमि-
विप्रो बभाषे--हे भैमि! भवदर्थेऽहं बहूनि ग्रामाकरपुरनगराणि
भ्रान्त्वा भ्रान्त्वा बहुभिर्दिनैरत्रागतोऽस्मि, इत्युक्त्वा भैम्याः पा-
ुपङ्करुहेऽपतत्। अद्यप्रभृति सकलोऽपि ते स्वजनवर्गो जीवित-
ाप्स्यति तव दर्शनादाकर्णनाच्च। ततः स विप्रश्चन्द्रयशोऽन्तिके
मागत्य चन्द्रयशसं वर्द्धापयामास। हे देवि! चन्द्रयशोराज्ञि!
भैम्या दर्शनात् त्वं मया वर्द्धाप्यसे। तयोक्तम्--भो विप्र! क्वास्ति
भैमी?। तेनोक्तम्--या तव दानशालायां दानं ददाति सैव दमयन्ती।
त् श्रुत्वा चन्द्रयशास्तत्क्षणं तत्रागात्। यत्र दमयन्ती तत्रा-
ात्य भैमीं समालिङ्ग्य साश्रुवदना चन्द्रयशाः प्रोवाच--हे
ुत्रि! त्वया एतावत्कालं आत्मा कथं गोपितः?; ममाग्रे त्वया
कथं न प्रकाशितम्?; अहं किं तव कथनार्हा नाभवं यत् त्वया-

ऽऽत्माऽवगूहितः ? अथवा तव को दोषः ? ममैव दोषः, यत्त्वं मम गृहे समागताऽपि मया न ज्ञाता। हा हा धिग् माम् । पूर्वं दृष्टाऽपि नोपलक्षिता । हे वत्से ! त्वयाऽहं कथं वञ्चिता एतावत्कालं ? मातृष्वसाऽपि मातैव, अत्र का त्रपा ? । हे पुत्रि ! त्वं नलेन किं त्यक्ताऽसि? अथवा त्वया किं नलस्त्यक्तः ?। अथ सूर्यातिरेकप्रकाशस्ते ललाटतिलकः क ?। भैम्यापि सनिष्ठीवेन पाणिना निजं भालं मार्ष्टि स्म । ततः स विडम्बितसहस्रांशुर्ललाटतिलकः प्रादुर्बभूव । ततो नरेन्द्रवल्लभा तां करे धृत्वा गृहे समाहूय सुगन्धवारिभिस्तस्याः स्नानं कारयित्वा चन्द्रज्योत्स्ने दुकूले परिधाप्य तैस्तैः प्रेमोपचारैस्तां भैमीमानन्दयत् । तां भैमीं करे धृत्वा राज्ञः समीपे राज्ञी समानयत् । राजाऽपि तां भैमीं राज्यभ्रंशादिकां कथामपृच्छत् । दमयन्त्यपि पूर्वानुभूतां स्वां कथां द्यूतक्रीडादिकां सर्वामचीकथत् । ततः शोकाकुलां रुदतीं दमयन्तीं तस्या एवोत्तरवाससा नयनयोरश्रूण्युन्मार्जयन्नुवाच--हे वत्से ! मा खिद्यस्व, बलीयान् को नाम कर्मभ्यः?। एवं तेषां सर्वेषां राजराज्ञीभैमीप्रभृतिस्वजनानां वार्त्तां कुर्वतां रविरस्तं ययौ । परं वैदर्भीतिलकानुभावतस्तत्प्रदेशे दमयन्त्याऽऽश्रितस्थाने उद्द्योतेन प्रसृतम् ; कराच्छादिते पुनस्तिलके ध्वान्तेन प्रसृतम् ; पुनः पाणौ दूरीकृते तिलकोद्द्योतेन द्योतितम् । तद् दृष्ट्वा विस्मितो राजा । तस्यां रात्रौ कश्चिद्देवो द्युतिभासुरो भैमीं नमस्कृत्य पुरो निषण्णस्तामित्यवोचत्–हे देवि ! दमयन्ति ! सोऽहं पिङ्गलकनामा चौरो यस्त्वया पुरा मोचितो मरणाद्रक्षितो दीक्षां ग्राहितो विहारं कुर्वन् पुनस्तापसपुरं गतो रात्रौ प्रतिमया श्मशाने स्थितः; तत्र वनवह्निना वेष्टितः सम्यगाराधनां विधाय तया ज्वालया दग्धवपुः सौधर्मे महर्द्धिके विमानाधिपो देवोऽभवम् ; सोऽहं पिङ्गलनामा देवः। यदि त्वं तदा मां दीक्षां नाऽग्राहयिष्यथास्तदा मे स्तैन्यपापेन नरके गतस्य क

गतिर्भवित्री?, क्व चैमा देवश्रियोऽभविष्यन् ?। हे मातः ! एष सर्वस्तव प्रसादो यदहमेवंविधां देवश्रियं प्राप्तोऽस्मि । अथाहं तव किमुपकारं करोमि? । तयोक्तम्—यदि मम हृदये जिनोदितो धर्मो वर्त्तते तर्हि मम सर्वं वर्त्तते; त्वमपि जैनं धर्मं समाराधय । यथा तव पुनरुत्तरोत्तरा ऋद्धिर्भवति, इत्युक्त्वा दमयन्ती तूष्णीं बभूव। देवोऽवोचत्—न मोघं देवदर्शनम्; एवं कथयित्वा हेम्नः सप्तकोटीः प्रवृष्य देवः स्वस्थानं गतः । तद्धर्मफलं दृष्ट्वा राजा ऋतुपर्णः सम्यक्त्वमूलं द्वादशव्रतरूपं जिनधर्मं भेजे । अथैकदाऽवसरमासाद्य हरिमित्र ऊचे—हे राजन् ! भैमी अत्र सुचिरं स्थिता, तवाज्ञयाऽथ पितुर्गृहे यातु; अस्या माता पुष्पदन्ती, पिता भीमराट् एतस्याः प्रवासश्रवणादेव दुःखितौ तिष्ठतः। ततो राजा ऋतुपर्णश्चन्द्रयशसा सह भैमीं सुखासने समारोप्य महासेनया सह कुण्डिनपुरं प्रति प्राहिणोत् । भीमभूपतिः सुतां दमयन्तीमायान्तीं श्रुत्वा हर्षाश्रुलोचनः सैन्यपरिवृतः पुष्पदन्त्याऽन्वितः पुत्रादिभिः सहितः कतिपयभुवं संमुखमागात् । दमयन्त्यपि पितरं संमुखमागतं ज्ञात्वा दूरतो यानमत्यजत् । भैमी रभसाद्धावित्वा पितुः पादयोरपतत् ; पश्चान्मातरं पुष्पदन्तीं कण्ठे लगित्वा दमयन्ती तारतारं रुरोद । मिलनानन्तरं भीमराट् सुतां पुरस्कृत्य महोत्सवपुरःसरं कुण्डिनपुरं प्राविशत् । पुत्रीसमागमनहर्षितो भीमराट् स्वपुरे जिनचैत्येऽष्टाह्निकोत्सवमकारयत् । अथैकस्मिन् दिने भीमराट् दमयन्तीमपृच्छत्—किं किं जातम् ? नलेन किं किं कृतम् ?। ततो भैम्या द्यूतादारभ्य यावद्वने त्यक्ता, ततस्तापसपुरे सप्त वर्षाणि स्थिता; ततोऽचलपुरे स्थिता; तत्र मातृष्वसा चन्द्रयशा मिलिता; तत्र हरिमित्रनामा विप्रो मिलितस्तेनात्र समानीता इति वृत्तान्तः कथितः । अथ भीमराजोवाच—हे पुत्रि ! अथ त्वमस्मत्सदने स्थिता धर्मं समाराधय । धर्मस्यानुभावतस्तवात्रैव भर्त्रा नलेन

सह सङ्गमो भविष्यति । अहमप्यतःपरं कश्चिदुपक्रमं करिष्ये, यथा कुतश्चिदभ्येत्य तव पतिर्मिलिष्यति, इत्युक्त्वा तां भैमीं पुष्पदन्त्याः समीपे स्थापयामास। हरिमित्रविप्राय राज्ञा भीमेन तुष्टेन दमयन्त्यागमवर्द्धापनेन ग्रामपञ्चशती ददे। पुनस्तुष्टोऽभ्यधात्–नलागमे तुभ्यं राज्यार्द्धं दास्ये, इत्युक्त्वा तोषितः। सोऽपि स्वस्थानं गतः । एवं दिनानि यान्ति स्म । एकस्मिन् दिने नलदुःखेन पीडितां भैमीं दृष्ट्वा भीम उवाच–हे पुत्रि ! अथ तव का चिन्ता ? त्वं राज्यस्वामिनी वर्त्तसे। भैम्योक्तम्--हे राजेन्द्र ! हे तात ! तव जामातरं विना किं मे जीवितेन ?, किं राज्येन ?; वीरसेनसुतं विना मम सर्वं शून्यम् ?। कियन्ति वत्सराणि जातानि तस्य नलस्य काऽपि वार्त्ताऽपि न श्रुता ?। अद्यापि किं जीवति वा मृतो वा ? इति चेतसि चिन्ता वर्तते। अथाहं नलस्य चिन्तां करिष्ये त्वं स्वस्था भव इत्युक्त्वा भीमेन स्वसेवकानाहूय इत्युक्तम्--भोः सेवकाः ! यो नलवृत्तान्तं ज्ञात्वा समानयाति तस्याहं गोसहस्रं दास्ये इत्युक्त्वा स्वसेवकाः सर्वासु दिक्षु प्रेषिताः। तदा दमयन्ती नलसंकेतसंबद्धं चित्तक्षोभकारि, इति श्लोकद्वयं तान् सेवकान् शिक्षयामास ।

यथा—

"पटं छित्त्वा प्रनष्टोऽसि वने सुप्तां विहाय माम् ।
हृदयाद् यदि मे यासि तद्वेद्मि तव पौरुषम् ॥ १ ॥
तव प्रिय ! कलत्रे च मित्रे च ममता गता ।
स्थितो योगीव निर्लोभस्त्वं देव ! द्यूतदीक्षया " ॥२॥

इत्थं श्लोकद्वयार्थेनावधारितसंकेताः भीमसेवकाश्चतुर्दिक्षु नलं गवेषयितुं प्रवृत्ताः। ततस्तैर्भीमसेवकैर्ग्रामाकरपुरादिषु सर्वत्र भ्रान्त्वा भ्रान्त्वा विलोकितम्, परं क्वापि नलस्य शुद्धिरपि न लब्धा; तदा ते सेवकाः प्रत्यागता भीमं राजानमूचुः। तदा दमयन्त्यपि शृणोति स्म । यथा--हे राजन् ! अस्माभिस्तवाज्ञया

मेव । अन्योऽन्यव्याप्तितो जात्यन्तरात्मकत्वेन भेदाभेदपक्षे तदसंभवात् केवलाकारानुपपत्तेः, इतरानुविद्धस्य च प्रश्नानर्हत्वादिति ॥

**धर्माणामपीत्यादि** । धर्माणामपि ज्ञेयत्वादीनाम्, तदभावे धर्म्यभावे, निराश्रयत्वाद् निराधारत्वात्, तथा केवलानां ग्रहणानुपपत्तेस्तथाननुभवेन, तथा तदितराननुवेधाज्ज्ञेयत्वादीनां सत्त्वाद्यननुवेधात्, अभाव एव इत्येवम्, तदसत्त्वापत्तिर्धर्मधर्मिणोरसत्त्वापत्तिः। **एकान्ताभेद इति,** तथा **एकान्तेत्यादि** । एकान्ताभेदेऽपि तदसत्त्वापत्तिरेवेति वक्ष्यमाणक्रियायोगः । कुत इत्याह– **अन्यतराभावतः** एकान्ताभेदे हि धर्मिमात्रं वा स्यात्, धर्ममात्रं वा, इत्यन्यतराभावः । ततः किमित्याह–**तन्नान्तरीयकत्वात्** यदभावस्तन्नान्तरीयकत्वात् कारणात्, धर्मनान्तरीयको धर्मी, धर्मिनान्तरीयकश्च धर्म इति कृत्वा । किमित्याह– **तद्व्यतिरेकेण** धर्माद्यभावेन, तत्स्वरूपानुपपत्तेर्धर्म्यादिस्वरूपायोगात्, अन्यतरस्याप्यभाव एवेति संबन्धः, धर्माभावे धर्मिणोऽप्यभावः, धर्म्यभावे च धर्मस्याऽप्यभाव एवेति कृत्वा, तदसत्त्वापत्तिरेव, धर्मधर्मिणोरसत्त्वापत्तिरेव । कल्पितो धर्मधर्मिभाव इत्याशङ्काऽपोहायाह– **निर्बीजकल्पनाऽसंभवात्** एकान्तैकस्वभावे वस्तुनि प्रवृत्तिनिमित्तमन्तरेण धर्मधर्मिकल्पनाऽसंभवात्, असंभवश्च अतिप्रसङ्गाऽव्याहतेर्वान्ध्येयखरविषाणकल्पनासंभवात्, उभयत्र कल्पनाबीजाभावाऽविशेषात्। **अन्यतरेत्यादि** । अन्यतरभावस्यैव धर्माद्यन्यतरसत्ताया एव, अन्यतरकल्पनाबीजत्वायोगाद् धर्माद्यन्यतरकल्पनाकारणत्वायोगात्, अयोगश्च एकान्तैकस्वभावत्वहानेः, न ह्येकान्तैकस्वभावमनेककल्पनाबीजम् । **तथाविधेत्यादि** । तथाविधैकस्वभावत्वस्य धर्मधर्मिकल्पनाबीजैकस्वभावत्वस्य, न्यायविरुद्धत्वाद् युक्तिविरुद्धत्वात्; न्यायविरुद्धत्वं च शक्तिभेदमन्तरेण कार्यभेदासिद्धेः रेकशक्तिकात् ततो धर्मधर्मिकल्पनाकार्यभेदानुपपत्तेः। **तदितरेत्यादि।** तदितरव्यावृत्तेरपि धर्मधर्मिव्यावृत्तेरपि, तत्त्वतः परमार्थतः, तदव्यति-

रेकादेकस्वभाववस्त्वव्यतिरेकात्, तद्भेदे च व्यावृत्तिभेदे च, तद्भेदोपपत्तेर्व्यावृत्तवस्तुभेदोपपत्तेः, एवं चाभिधानभेदतोऽभिधानभेदेन व्यावृत्तिलक्षणेन, धर्मसिद्धिप्रसङ्गाद् व्यावृत्तीनामेव धर्मत्वेन तथा वस्तूनां भेदभावेन; न चैतदिष्यत इति, अन्यतरस्याप्यभाव एवेति तदसत्त्वापत्तिरेवेति व्याख्यातमेतत्। एतेनेत्यादि । एतेनानन्तरोदितेन विरोधपरिहारेण, अथ येनाऽप्याकारेण भेदस्तेनापि भेदश्चाभेदश्चेत्याद्यपि पूर्वपक्षवचनं, निराकृतमेव । कुत इत्याह– **अन्योन्यव्याप्तितो जात्यन्तरात्मकत्वेन भेदाभेदपक्षे तदसंभवात्** तस्य अथ येनाप्याकारेणेत्यादेर्विकल्पजातस्य, असंभवात्। उपपत्तिमाह– **केवलाकारानुपपत्तेः** अनन्तरोदितभेदाभेदपक्षे । इतरानुविद्धस्य च भेदाकारानुविद्धस्य चाभेदाकारस्य, प्रश्नानर्हत्वात् कैवल्याभावेन नरसिंहे सिंहप्रश्नतुल्यत्वादिति ॥

**यच्चोक्तम्–किं च भेदाभेदमभ्युपगच्छताऽवश्यमेवेदमङ्गीकर्तव्यम्–इह धर्मधर्मिणोर्धर्मधर्मितया भेदः, स्वभावतः पुनरभेद इत्यादि। तदप्येकधर्मिप्रतिबद्धत्वेऽपि धर्माणां मिथो भेदाद् धर्मधर्मिभावेन भेदः, मिथो भेदेऽपि चाशेषधर्माणां धर्मिणा व्याप्तेर्विशिष्टान्योन्यानुवेधतोऽभेद इत्यादिना प्रत्युक्तम्, प्रकारान्तरेण भेदाभेदसिद्धेः ।**

**तथा चोक्तम्—**

**"नाभेदो भेदरहितो भेदो वाऽभेदवर्जितः ।**
**केवलोऽस्ति, यतस्तेन कुतस्तत्र विकल्पनम् ? ॥ १ ॥**
**येनाकारेण भेदः किं तेनासावेव, किं द्वयम् ? ।**
**असत्त्वात् केवलस्येह सतश्च कथितत्वतः ॥ २ ॥**
**यतश्च तत्प्रमाणेन गम्यते ह्युभयात्मकम् ।**
**अतोऽपि जातिमात्रं तदनवस्थादिदूषणम् ॥ ३ ॥**
**एवं ह्युभयदोषादिदोषा अपि न दूषणम् ।**
**सम्यग्जात्यन्तरत्वेन भेदाभेदप्रसिद्धितः ॥ ४ ॥**
**तेनानेकान्तवादोऽयमज्ञैः सम्प्रकल्पितः ।**

**न युज्यते वचो वक्तुमिति न्यायानुसारिणः" ॥ ५ ॥**

यच्चोक्तं पूर्वपक्षग्रन्थे, किंच भेदाभेदमभ्युपगच्छताऽवश्यमेवे-दमङ्गीकर्तव्यमिह धर्मधर्मिणोर्धर्मधर्मितया भेदः, स्वभावतः पुनरभेद इत्यादि । तदप्येकधर्मिप्रतिबद्धत्वेऽपि धर्माणां मिथो भेदाद् धर्मधर्मि-भावेन भेदः, मिथो भेदेऽपि चाशेषधर्माणां धर्मिणा व्याप्तेर्विशिष्टा-न्योन्यानुवेधतोऽभेद इत्यादिना पूर्वोक्तेन, प्रत्युक्तम् । कथमित्याह- **प्रकारान्तरेण** अन्योन्यानुवेधलक्षणेन, भेदाभेदसिद्धेः । तथा चोक्तं वृद्धैः । नाभेदो धर्मधर्मिणोः, भेदरहितः, भेदो वा तयोरेवाऽभेदवर्जितः केव-लोऽस्ति, यतस्तेन कारणेन, कुतस्तत्र भेदेऽभेदे वा विकल्पनम् । किंभूतमि-त्याह- **येनेत्यादि** । येनाकारेण भेदः किं तेनाऽसावेव भेद एव, किं द्वयं भेदश्चाभेदश्च किम् । इत्येवं विकल्पनमयुक्तमित्याह- **असत्त्वात् केव-लस्येह** भेदस्याभेदस्य वा, सतश्चेतरानुविद्धतया शबलस्य, कथिततत्वतः कारणादिति । **यतश्चेत्यादि** । यतश्च यस्माच्च कारणात्, तद् वस्तु, प्रमा-णेन प्रत्यक्षेण, गम्यत एव, उभयात्मकं धर्मिधर्मात्मकम्, तथा प्रतीतेः । अतोऽपि कारणात्, जातिमात्रं तत् । किमित्याह- **अनवस्थादिदूषणं** सति तस्मिंस्तदनवस्थिततया प्रमाणाप्रवृत्तेः । **एवं हीत्यादि** । एवमेव, उभयदोषादिदोषा अपि न दूषणम्, आदिशब्दाद् वैयधिकरण्यपरिग्रहः । कुतो न दूषणमित्याह- **सम्यगित्यादि** । सम्यग् न्यायोपपन्नतया, जात्य-न्तरत्वेन हेतुना, भेदाभेदप्रसिद्धितः कारणादिति । येनैतदेवम्, **तेनेत्यादि** । तेन कारणेन, अनेकान्तवादोऽयमज्ञैः समुपकल्पितः न युज्यते वचो वक्तुमित्येवम्, न्यायानुसारिण इति ॥

**अपरस्त्वाह—सदसद्रूपं वस्त्वित्यत्र कथं धर्मधर्मिभावः ? । कथं च न स्यात् ?, सदसत्त्वयोर्धर्मत्वे तद्व्यतिरिक्तस्य वस्तुनोऽ-भावाद् धर्म्यसिद्धेः, तद्धर्मिभावे वा वस्तुत्वेन तद्व्यतिरिक्तधर्मा-नुपपत्तेरिति ॥**

अपरस्त्वाह- **सदसद्रूपं वस्त्वित्यत्र**ोभयरूपे तत्त्वे, **कथं धर्मधर्मि-भावः** कथमिति क्षेपे, नैवेत्यभिप्रायः । सिद्धान्तवाद्याह- **कथं च न स्याद्**

धर्मधर्मिभाव इति । अत्राह–सदसत्त्वयोरित्यादि । सदसत्त्वयोर्धर्मत्वे सति, तद्व्यतिरिक्तस्य सदसत्त्वव्यतिरिक्तस्य, वस्तुनोऽभावाद्-परस्य, तदुभयमात्रतया तस्येति भावः। धर्म्यसिद्धेः कारणाद्, न धर्मिधर्मभावः। तद्धर्मिभावे वा तयोः सदसत्त्वयोर्धर्मित्वे वा, वस्तुत्वेन हेतुना, तयोरेव वस्तुत्वादित्यभिप्रायः। किमित्याह-- तद्व्यतिरिक्तधर्मानुपपत्तेः सदसद्रूपवस्तुधर्मिव्यतिरिक्तधर्मानुपपत्तेः, न धर्मधर्मिभाव-इति न सदसत्त्वमात्रे वस्तुनि धर्मिण्यपरधर्मभाव इत्यर्थः ॥

अत्रोच्यते–सदसत्त्वयोर्धर्मत्वे तत्समानपरिणामस्य वस्तुत्वाभिधानस्य धर्मित्वप्रतिज्ञानात्,तस्य च कथञ्चित्सदसत्त्वाभ्यामन्यत्वाद् धर्मधर्मिभावः। तथाहि-कथञ्चित् सदसत्त्वाभ्यामन्य एव तत्साधारणात्मा वस्तुत्वपरिणामः, तथानुभवसिद्धत्वाद्,वस्त्वित्येकरूपतया प्रतीतेः । न चेयं तदुभयमात्रनिबन्धनैव, प्रतिभासभेदात् । एवमपि तन्निबन्धनत्वाभ्युपगमेऽतिप्रङ्गात् , रूपमात्रादेव तद्रसादिप्रतीतिसिद्धेः । न चैतदतन्त्रानुपाति, तुल्यांशस्य द्रव्यत्वाभ्युपगमात् , अस्य च तद्भावोपपत्तेरिति । तद्धर्मिभावेऽपि वस्तुत्वेन चेतनत्वाचेतनत्वमूर्तत्वामूर्तत्वज्ञेयत्वप्रमेयत्वादिधर्मसिद्धेर्धर्मधर्मिभावोपपत्तिरेव । न च सदसती एव चेतनत्वादि, तन्मात्रतत्त्वे सर्वत्र तद्भावप्रसङ्गात् साङ्कर्येण चेतनत्वाद्यभावः। न च विशिष्टे सदसती एव तत्, भेदकमन्तरेण विशिष्टत्वासिद्धेः, तन्मात्रत्वाविशेषात् ; इति कथञ्चित्तदतिरिक्तचेतनत्वादिसिद्धिः। अन्यथा तज्ज्ञानायोगाद् निर्विषयत्वात् शक्तिभेदमन्तरेणैकतोऽनेककार्यासिद्धेरिति। एवमितरेतरानुविद्धतुल्येतराऽनेकान्तात्मकत्वे वस्तुनः प्रतिपत्त्रनुरोधतस्तथा धर्मधर्मिभावो न विरुध्यत इति॥

अत्रोच्यते सदसत्त्वयोर्धर्मत्वे सति। किमित्याह–तदित्यादि। तत्समानपरिणामस्य तयोः सदसत्त्वयोस्तुल्यपरिणामस्य। किंभूतस्येत्याह–वस्तुत्वाभिधानस्य एतदभिधेयस्येत्यर्थः । किमित्याह–धर्मित्वप्रति-

**ज्ञानात्** कारणात्, तस्य च वस्तुसमानपरिणामस्य, कथञ्चित् प्रतिभासभेदादिहेतुतया, सदसत्त्वाभ्यां सकाशात्, अन्यत्वात्। किमित्याह— **धर्मधर्मिभावः** तत्समानपरिणामस्य धर्मित्वात्, तयोश्च धर्मत्वादित्यर्थः । एतदेव भावयति— **तथाहीत्यादिना** । तथाहीति पूर्ववत्, कथञ्चित् केनचित् प्रकारेण, सदसत्त्वाभ्यां सकाशात्, अन्य एव तत्साधारणात्मा सदसत्त्वसाधारणात्मा, वस्तुत्वपरिणामो धर्मिरूपः। कुत इत्याह— **तथाऽनुभवसिद्धत्वात्** तथा तद्देशनियततया तदतिरिक्तानुभवसिद्धत्वात्। एतदेवाह— **वस्त्वित्येवम्**, एकरूपतया प्रतीतेः कारणात्। न चेयं प्रतीतिः, तदुभयमात्रनिबन्धनैव सदसत्त्वोभयमात्रकारणैवैकान्तेन। कुत इत्याह— **प्रतिभासभेदात्** प्रतिभास आकारः । एवमपि प्रतिभासभेदेऽपि सति, तन्निबन्धनत्वाभ्युपगमे प्रक्रमाद् वस्त्विति प्रतीतेस्तदुभयमात्रनिबन्धनत्वाङ्गीकरणे। किमित्याह— **अतिप्रसङ्गात्** । एनमेवाह— **रूपमात्रादेव** सकाशात्, तद्रसादिप्रतीतिसिद्धेस्तस्मिन्नधिकृतवस्तुनि रसादिप्रतीतिसिद्धेः, अन्यत एवान्याकारविज्ञानभावेन; एवं च रसाद्यभावप्रसङ्ग इति भावनीयम्। **न चैतदित्यादि** । न चैतत् समानपरिणामस्य वस्तुनो धर्मित्वप्रतिज्ञानम्, अतन्त्रानुपाति तन्त्रविरोधीत्यर्थः। कुत इत्याह— **तुल्यांशस्य द्रव्यत्वाभ्युपगमात्** द्रव्यार्थपर्यायार्थचिन्तायां वृद्धग्रन्थेषु, अस्य च तत्समानपरिणामस्य, तद्भावोपपत्तेस्तुल्यांशत्वोपपत्तेरिति । पक्षान्तरमाधिकृत्य समाधिमाह— **तद्धर्मिभावेऽपीत्यादिना** तद्धर्मिभावेऽपि तयोः सदसत्त्वयोर्धर्मित्वेऽपि, वस्तुत्वेन हेतुना । किमित्याह—**चेतनत्वाचेतनत्वमूर्तत्वामूर्तत्वज्ञेयत्वप्रमेयत्वादिधर्मसिद्धेः** विज्ञानघटादिषु, धर्मधर्मिभावोपपत्तिरेव सदसत्त्वयोर्धर्मित्वे चेतनत्वादीनां धर्मत्वादिति। **न चेत्यादि**। न च सदसती एव सत्त्वमसत्त्वं चेत्यर्थः । किमित्याह— **चेतनत्वादि** चेतनत्वमचेतनत्वं चेत्यादि। कुत इत्याह— **तन्मात्रेत्यादि**। तन्मात्रतत्त्वे तन्मात्रस्य सदसन्मात्रस्य तत्त्वे चेतनादित्वे, सर्वत्रा-

ऽविशेषेण, तद्भावप्रसङ्गात् चेतनत्वादिभावप्रसङ्गात्, एवं च सर्वत्र त-द्भावे सांकर्येण हेतुना, चेतनत्वाद्यभावश्चेतनत्वाचेतनत्वाद्यभावः, मिथो विरुद्धानामन्योन्यात्मनाऽभावादित्यर्थः । **न चेत्यादि**। न च विशिष्टे केनचिद्रूपेण, सदसती एव, तत् चेतनत्वादि । कुत, इत्याह– **भेद-कमन्तरेण वस्त्वन्तरविशिष्टत्वासिद्धेः**। अत्रैव युक्तिमाह– **तन्मात्र-त्वाविशेषात्** सदसन्मात्रत्वाभेदाद् भावनीयमेतत, इत्येवम्, कथञ्चित् केनचित् प्रकारेण तद्भेदकत्वलक्षणेन, तदतिरिक्तचेतनत्वादिसिद्धिः सद्-सदतिरिक्तचेतनत्वादिसिद्धिः । इत्थं चैतदङ्गीकर्तव्यमित्याह– **अन्यथे-त्यादि**। अन्यथैवमनभ्युपगमे, तज्ज्ञानायोगात् चेतनत्वादिज्ञानायो-गात्, अयोगश्च निर्विषयत्वान् सदसतोस्तदभावेन । अथ सदसती एव विषय इत्याशङ्क्याह– **शक्तिभेदमन्तरेणैकतः** सदसदादेः, अने-ककार्यासिद्धेस्तच्चेतनत्वाद्यनेकज्ञानकार्यासिद्धेरिति । उपसंहरन्नाह— **एवमित्यादि**। एवमुक्तेन प्रकारेण, इतरेतरानुविद्धाश्च ते तुल्येतराने-कान्ताश्चेति विग्रहस्तदात्मकत्वे सति, वस्तुनः प्रतिपत्त्रनुरोधतो यो यथा प्रतिपत्ता तदनुरोधेन, तथा तथोक्तवत् तेन तेन प्रकारेण, धर्मधर्मिभावो न विरुध्यते उभयनिमित्तयोगादिति ॥

**यदप्युक्तम्– संविन्निष्ठा विषयव्यवस्थितयः, न च सदसद्रूपं वस्तु संवेद्यते, उभयरूपस्य संवेदनस्याभावादित्यादि । तदप्य-साम्प्रतम्, उभयरूपस्य संवेदनस्याभावाऽसिद्धेः, सदसद्रूपस्य वस्तुनो व्यवस्थापितत्वात्, संवेदनस्यापि च वस्तुत्वात्, तथा युक्तिसिद्धेश्च । तथाहि--संवेदनं पुरोऽवस्थिते घटादौ तद्भावेतरा-भावाध्यवसायरूपमेवोपजायते, तद्भावमात्रस्येतराभावाननुविद्ध-स्याभावापत्तितस्तदनुवेधे वस्तुस्थित्या स्वप्रतिभासिसंवेदनाज-नकत्वे तद्ग्रहणानुपपत्तेः । न च सदसद्रूपे वस्तुनि सन्मा-त्रप्रतिभास्येव तत्त्वतस्तत्प्रतिभासि, संपूर्णार्थोऽप्रतिभासनाद्, नरसिंहे सिंहसंवेदनवत् । न चैतदुभयप्रतिभासि न संवेद्यते,**

**तदन्यविविक्तताविशिष्टस्यैव संवित्तेः, तदन्यविविक्तता चाभाव-इति सूक्ष्मधिया भावनीयम् ।**

यदप्युक्तं पूर्वपक्षग्रन्थे, संविन्निष्ठा विषयव्यवस्थितयः, न च सदसद्रूपं वस्तु संवेद्यते, उभयरूपस्य संवेदनस्याभावादित्यादि । तदप्यसांप्रतमशोभनम् । कुत इत्याह— **उभयरूपस्य संवेदनस्याभावाऽसिद्धेः** कारणात्, असिद्धिरपि सदसद्रूपस्य वस्तुनो व्यवस्थापितत्वात्, तथा संवेदनस्यापि च वस्तुत्वात्, तथा युक्तिसिद्धेश्च । एनामेव दर्शयति— **तथाहीत्यादिना** । तथाहीत्युपप्रदर्शने, संवेदनं विज्ञानम्, पुरोऽवस्थिते घटादौ विषये, तद्भावेतराऽभावाध्यवसायरूपमेव घटभावाऽघटाभावपरिच्छेदरूपमेव, उपजायते, तद्भावमात्रस्य घटभावमात्रस्य, इतराभावाननुविद्धस्याऽघटाभावाननुविद्धस्य । किमित्याह— **अभावापत्तितो** वस्तुस्थित्याऽघटत्वेन, तदनुवेधेऽन्यासत्त्वानुवेधे सति, वस्तुस्थित्या स्वप्रतिभासिसंवेदनाजनकत्वे उभयरूपसंवेदनाजनकत्वे इत्यर्थः । किमित्याह— **तद्ग्रहणानुपपत्ते**स्तस्योभयरूपस्य वस्तुनो ग्रहणानुपपत्तेरिति, यद् यथारूपं तत् तथाऽगृह्यमाणं कथं गृहीतं नाम ? इति भावनीयम् । **न चेत्यादि** । न च सदसद्रूपे वस्तुन्युभयात्मके, सन्मात्रप्रतिभास्येव संवेदनमिति गम्यते, तत्त्वतस्तत्प्रतिभासि सदसद्रूपवस्तुप्रतिभासि । कुत-इत्याह— **संपूर्णार्थाऽप्रतिभासनात्** असत्त्वाप्रतिभासनेन, नरसिंहे सिंहसंवेदनवदिति निदर्शनम्, न सिंहसंवेदनं नरसिंहप्रतिभासि, एवं च वस्तुनोऽग्रहणमेवेति । **न चेत्यादि** । न चैतत् संवेदनम्, उभयप्रतिभासि प्रक्रमात् सदसदुभयप्रतिभासनशीलम्, न संवेद्यते किन्तु संवेद्यत-एव । युक्तिमाह— **तदन्यविवक्तताविशिष्टस्यैव** संवेदनान्तरविवक्तताविशिष्टस्यैव, संवित्तेः कारणात्, तदन्यविविक्तता चाऽभावस्तदन्येषां तत्र, इति सूक्ष्मधिया भावनीयमुक्तनीत्यैव न ह्यसति चेतनात्वेऽणुश्चेतनास्वभावो नामेत्यादिलक्षणया ॥

किन्तु तदेवासहायत्वं सहायाभावं भेदकमन्तरेण ससहायस्यैव न युज्यत इति ब्रूमः । असहायं च घटोऽयं न पटादीति क्षयोपशमानुरूपमपरित्यक्तान्योऽन्यगर्भं संवेदनमाविद्वदङ्गनादि प्रतीतम्, इत्यविषयोऽयं विवादस्य। न चैतदनर्थजम्, तद्भावभावित्वोपलब्धेः, तदन्यस्य तु तदाभासत्वात्, तस्यापि च कदाचित् तथाविधानुभवनिबन्धनत्वेनाऽनिमित्तत्वायोगादिति ॥

**तदेवेत्यादि**। तदेवाधिकृतं संवेदनम्, असहायमन्यरहितम्, तदन्यविविक्तं संवेदनान्तरविविक्तम्, इति चेत्। एतदाशङ्क्याह—**को वा किमाह** इत्थमेवैतदित्यर्थः। **किन्त्वित्यादि**। किन्तु तदेवासहायत्वमन्यरहितत्वम्, सहायाभावं मुख्यम्, भेदकमन्तरेण विना, ससहायस्येवापरस्य, न युज्यत इति ब्रूमो न तु किञ्चिदन्यत्। प्रकृतयोजनामाह-**असहायं चेत्यादि**। असहायं च तदन्यविविक्तं च। कथमित्याह—**घटोऽयं न पटादीति** एवम्, क्षयोपशमानुरूपं तदनन्तधर्मकत्वेऽपि नियमप्रवृत्त्या, अपरित्यक्तान्योन्यगर्भमितरेतरानुवेधात् संवेदनमिति विशेष्यम्, आविद्वदङ्गनादि प्रतीतं सकललोकप्रसिद्धमित्यर्थः। इत्येवं प्रतीतत्वादेव, अविषयोऽयं विवादस्य, अतो यादृशमिदं तादृशोऽर्थोऽपीति भावः। **न चैतदित्यादि**। न चैतदनन्तरोदितं संवेदनम्, अनर्थजमवस्तुनिमित्तम्। कुत इत्याह— **तद्भावभावित्वोपलब्धेः** अर्थभावे भावित्वोपलब्धेरस्य परिणाम्यर्थग्रहणस्वभावतया न विरुद्धैवेयमिति भावनीयम्। क्वचिदेतदर्थाभावेऽपि भवति विकल्पजमित्याशङ्कानिरासार्थमाह— **तदन्यस्येत्यादि**। तदन्यस्य त्वनर्थजस्याधिकृतसंवेदनतुल्यस्य तु, तदाभासत्वात् संवेदनाभासत्वात्, तथाविधनिर्विकल्पकवदिति हृदयम्। तस्यापि च तदाभासस्य, कदाचिदिह वाऽमुत्र वा, तथाविधानुभवनिबन्धनत्वेन तत्तदध्यारोपानुभवनिबन्धनत्वेन हेतुना। किमित्याह— **अनिमित्तत्वायोगात्** कारणात्, न चैतदनर्थजमिति योगः॥

अत्राह—अस्त्येतदुभयविधं संवेदनम् , नाऽस्याऽपह्नुतिरास्थीयते; किन्त्वेतदपास्तकल्पनानुबन्धेन संवेदनेनैकस्वभाव एवावबुद्धे बोध्ये तदनुभवसामर्थ्यसमुत्थापितं विकल्पद्वयम् , न पुनर्भावाभावात्मकवस्तुप्रभवम् , इति न सूक्ष्मधिय आस्थामनोरथं पूरयति; यतोऽभावस्य कृत्यक्रियासूपरतव्यापारतयाऽभावत्वम् , यद्यसावपि कार्यक्रियासु कक्षां बध्नीयात् , को भावादभावस्य भवता विशेषो दर्शितः स्यात् ? अतो व्युपरतेऽक्षव्यापारेऽर्थपरिच्छेदानुभवसंस्कारप्रसूतो नास्तिताविकल्पः स्वातन्त्र्यं परिहरतीति॥

अत्राह—अस्त्येतदुभयविधमुभयप्रकारम् , संवेदनम् , नाऽस्यापह्नुतिरास्थीयतेऽस्माभिः, किन्त्वेतदुभयविधं संवेदनम् , अपास्तकल्पनानुबन्धेन निरस्तकल्पनासंबन्धेन, निर्विकल्पकेनेत्यर्थः, संवेदनेन विज्ञानेन, एकस्वभाव एव न नानास्वभावे, अवबुद्धे अवगते, बोध्ये वस्तुनि, भूयस्तदनुभवसामर्थ्यसमुत्थापितं यथोदितानुभववीर्यजनितम् , विकल्पद्वयं घटोऽयं न पटादीत्येतदिह वर्तते, न पुनर्भावाभावात्मकवस्तुप्रभवं निर्विषयत्वाद् विकल्पानाम् , इत्येवम् , न सूक्ष्मधियो निपुणमतेः, आस्थामनोरथं पूरयति एतद्विकल्पद्वयम् । अत्रैव युक्तिमाह— यत इत्यादिना । यतो यस्मात् , अभावस्य कृत्यक्रियास्वर्थक्रियासु, उपरतव्यापारतया कारणेन, अभावत्वं नान्यथा । इत्थं चैतदङ्गीकर्तव्यमित्याह— यद्यसावपि अभावः, कार्यक्रियास्वर्थक्रियासु, कक्षां बध्नीयात् यत्नं कुर्यात् , कस्तर्हि, भावात् सकाशात् , अभावस्य तुच्छस्य, भवता भावाभावात्मकवस्तुवादिना, विशेषो दर्शितः स्याद् न कश्चिदित्यर्थः । अतोऽस्मात् कारणात् , व्युपरतेऽक्षव्यापारे तदुत्तरकालमर्थपरिच्छेदानुभवसंस्कारप्रसूतो निर्विकल्पकसामर्थ्योद्भूत इत्यर्थः, नास्तिताविकल्पः न पटादीत्यादिरूपः, स्वातन्त्र्यं परिहरतीति अभावाक्षसंबन्धाभावेन भावमात्रवस्त्वनुभवपरतन्त्र इत्यभिप्रायः । एष पूर्वपक्षः ॥

अत्रोच्यते— तदनुभवसामर्थ्यसमुत्थापितं विकल्पद्वयमित्यनवद्यमेव, किन्तु न तद्द्वयनिमित्तस्वभावतामन्तरेणाऽस्माद्

**द्वयप्रसूतिः, हेत्वभेदेऽपि फलभेदाभ्युपगमेऽभ्युपगमविरोधात् । उपादानहेत्वभेदे सति स विरोधः, न च तत्सामर्थ्यमुपादानमस्य; अहेतुकं तर्ह्येतत् सौत्रान्तिकपक्षे, तदपरस्याभावात्, तस्यैव वासनादित्वात् । न च तत्त्वतस्तन्नीतावुपादानेतरहेत्वोर्भेदसिद्धिः, हेतुलक्षणाविशेषात्, विशिष्टलक्षणायोगाच्च ॥**

अत्रोच्यते समाधिः, तदनुभवसामर्थ्यसमुत्थापितं विकल्पद्वयमित्यनवद्यमेव अपापमेव, किन्त्विदमवद्यम्—न तद्द्वयनिमित्तस्वभावतामन्तरेण नेति प्रतिषेधे, तच्च तद् द्वयं च तद्द्वयमधिकृतविकल्पद्वयं तस्य निमित्तस्वभावता कारणस्वभावता तद्द्वयनिमित्तस्वभावता ताम्, अन्तरेण विना, अस्मादर्थपरिच्छेदानुभवसंस्कारात्, द्वयप्रसूतिः द्वयमिति विकल्पद्वयम् । कुतो न प्रसूतिरित्याह— **हेत्वभेदेऽपि** सति, **फलभेदाभ्युपगमे** क्रियमाणे, **अभ्युपगमविरोधात्** "अयमेव हि भेदो भेदहेतुर्वा भावानां यदुत विरुद्धधर्माध्यासः कारणभेदश्च" इत्यभ्युपगमात् । उपादानहेत्वभेदे सति, स विरोधोऽभ्युपगमविरोधः, न च तत्सामर्थ्यमर्थपरिच्छेदानुभवसंस्कारलक्षणम्, उपादानमस्याधिकृतविकल्पद्वयस्य, अतोऽयं न दोष इत्यभिप्रायः । एतदाशङ्क्याह— **अहेतुकं तर्ह्येतत्** विकल्पद्वयम् । कुत इत्याह— **सौत्रान्तिकपक्षे** बाह्यार्थवादिमते, **तदपरस्य** यथोदितसामर्थ्यातिरिक्तस्य, **अभावात्** कारणात् । वासनादि तदित्याशङ्कापोहायाह— **तस्यैव वासनादित्वात्** न ह्यधिकृतसामर्थ्यातिरिक्तमन्यद् वासनादि, अनभ्युपगमात् । योगाचारपक्षे त्वालयमधिकृत्योपरिष्टाद् वक्ष्यामः । **न चेत्यादि** । न च तत्त्वतस्तन्नीतौ सामान्येनैव, उपादानेतरहेत्वोर्नाममात्रकल्पितयोः, भेदसिद्धिः । कुत इत्याह—**हेतुलक्षणाविशेषात्** सामान्येन, **विशिष्टलक्षणायोगाच्च** द्वयोरपि ॥

**न चासाधारणादिहेतुतया तत्सिद्धिः, आद्यस्यासंभवात्, एकस्यैवानेककार्यकृत्त्वात् सर्वबुद्धैर्ज्ञप्तेः, अन्यथा तदतत्त्वप्रसङ्गः । स्वभावभेदमन्तरेण चाधिकृतसामर्थ्यस्यापि तदुभयनिमित्तत्वानुपपत्तेस्तदेकत्वापत्तिः । तथाहि— येन स्वभावेन तदेकस्य**

**निमित्तं तेनैवापरस्येति तद्वत् तदितरस्यापि तत्त्वम्, तत्तत्त्वा-न्यथाऽयोगात्, तदुभयनिमित्तत्वैकभावत्वे चित्रतया तद्भेद-सिद्धेः, इति भावाभावात्मकवस्तुप्रभवमेव तद्विकल्पद्वयम्, पा-रम्पर्येण तन्निमित्तत्वात्, अतोऽत्यन्तसूक्ष्मधियः किं नास्था-मनोरथं पूरयतीति वाच्यम्? ॥**

**न चेत्यादि**। न चाऽसाधारणादिहेतुतया असाधारण उपादा-नहेतुः साधारणस्त्वितर इत्येवंभूतया, तत्सिद्धिरुपादानेतरहेत्वोर्भेद-सिद्धिः। कुत इत्याह– **आद्यस्य** असाधारणस्य हेतोः, असंभवात्। कथ-मसंभव इत्याह– **एकस्यैवेत्यादि**। एकस्यैव वस्तुनः, अनेककार्यकृत्त्वात् अनेककार्यकरणशीलत्वात्। एतदेवाह– **सर्वबुद्धैः** सर्वज्ञैः, ज्ञप्तेरेकस्य। इत्थं चैतदङ्गीकर्तव्यमित्याह— **अन्यथेत्यादि**। अन्यथैवमनभ्यु-पगमे, तदतत्त्वप्रसङ्गस्तेषां बुद्धानामबुद्धत्वप्रसङ्गः, तदेकापरिज्ञाने तत्स-र्वज्ञत्वाभावादित्यर्थः। प्रकृतमेवाधिकृत्याह– **स्वभावेत्यादि**। स्व-भावभेदमन्तरेण चाऽधिकृतसामर्थ्यस्याऽभ्युपन्यस्तविकल्पद्वयनिमि-त्तस्य, तदुभयनिमित्तत्वानुपपत्तेः तच्च तद् उभयं च तदुभयं प्रक्रान्त-विकल्पोभयं तत्कारणत्वानुपपत्तेः कारणात्। किमित्याह– **तदेकत्वा-पत्तिः** तस्य प्रक्रान्तविकल्पोभयस्यैकत्वापत्तिः। एतदेव भावयति– **तथाहीत्यादिना**। तथाहीत्युपप्रदर्शने, येन स्वभावेन तदधिकृतसा-मर्थ्यम्, एकस्य निमित्तं प्रक्रमात् विकल्पस्य, तेनैव स्वभावेन, अपरस्य विकल्पस्य, इत्येवम्, तद्वदेकविकल्पवत्, तदितरस्याऽप्यपरविकल्पस्या-पि, तत्त्वमेकविकल्पत्वम्। कुत इत्याह– **तत्तत्त्वान्यथायोगात्** तस्या-धिकृतसामर्थ्यस्वभावस्य तत्त्वं येनैव तेनैवेत्यनेन प्रकारेणैकत्वं त-त्तत्त्वं तदन्यथायोगात्, न हि तदेवाऽकुर्वतस्तत्तत्त्वमिति भावनीयम्। तदुभयनिमित्तत्वैकस्वभावत्वेऽस्याऽदोष इति विभ्रमव्यपोहायाह— **तदुभयेत्यादि**। तदुभयनिमित्तत्वमधिकृतविकल्पोभयनिमित्तत्वमे-वैको भावः स्वभावो यस्याधिकृतसामर्थ्यस्य तत्तदुभयनिमित्तत्वै-कभावं तद्भावस्तस्मिन् सति, चित्रतया कारणेन, न ह्यनेकगर्भमेकम-

चित्रं नामेत्यर्थः, तद्भेदसिद्धेः प्रक्रमादधिकृतसामर्थ्यस्य स्वभावभेदसिद्धेः, इत्येवमुक्तनीत्या, भावाभावात्मकवस्तुप्रभवमेव तदधिकृतविकल्पद्वयम्। कुत इत्याह- **पारम्पर्येण तन्निमित्तत्वात्** तदुद्भवाद् निर्विकल्पकादुत्पत्तेरिति, न हि शुक्लवस्तुप्रभवादविकल्पाच्छुक्लपीतविकल्पद्वयप्रभव इत्यालोचनीयम्। **अत** इत्यादि। अतोऽस्मात् कारणात्, अत्यन्तसूक्ष्मधिय इत्थमालोचकस्य, किं नास्थामनोरथं पूरयतीति वाच्यं पूरयत्येवेत्यर्थः ॥

**यदपि चोक्तम्-यतोऽभावस्य कृत्यक्रियासूपरतव्यापारतयाऽभावत्वमिति; एतदपि न नो बाधायै, पररूपेणार्थक्रियाऽकरणात्, तद्रूपस्य च तत्राऽभावात्। ततश्च यद्यसावपि कार्यक्रियासु कक्षां बध्नीयात् को भावादभावस्य भवता विशेषो दर्शितः स्यादित्येतदप्यत्राऽनवकाशमेव, तथा कार्यक्रियाऽकरणादिति। अतो व्युपरतेऽप्यक्षव्यापारेऽर्थपरिच्छेदानुभवसंस्कारप्रसूतो नास्तिताविकल्पस्तत्प्रसूतत्वादेव कथं स्वातन्त्र्यं परिहरति? इति चिन्तनीयम्, अन्यथाभूतेऽर्थे तथापरिच्छेदानुभवसंस्कारानुपपत्तेः, अतथाभूताच्च ततो न नास्तिताविकल्पप्रसूतिरिति भावनीयम्। एतेन यदि प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव लब्धप्रतिष्ठं तासामेवावगमो युक्तस्तत्र व्यापारसम्भवात् अव्यापारेऽपि परिच्छेदे रूपप्रवृत्तेऽपि रसावसायोऽशक्यपरिहारः संपद्येतेति यदुच्यते परैः, तदपि प्रतिक्षिप्तमिति, पदार्थमात्राणामेवोक्तवद्भावाभावात्मकत्वात्, अन्यथा तन्मात्रतानुपपत्तेः, इतरेतराभावात्मकत्वे तत्तद्भावसिद्धेः ॥**

यदपि चोक्तं पूर्वपक्षे, यतोऽभावस्य कृत्याक्रियासूपरतव्यापारतयाऽभावत्वमिति। एतदपि न नः नास्माकम्, बाधायै। कुत इत्याह- **पररूपेणाऽर्थक्रियाऽकरणात्, तद्रूपस्य च** पररूपस्य च, **तत्र** वस्तुनि, **अभावात्**। ततश्च यद्यसावपि कार्यक्रियासु कक्षां बध्नीयात् को भावादभावस्य भवता विशेषो दर्शितः स्यादित्येतदप्यत्रोदितपक्षे, अन-

वकाशमेव। कुत इत्याह– **तथा** तेन पररूपभावप्रकारेण, कार्यक्रियाऽकरणादिति। अतो व्युपरतेऽप्यक्षव्यापारे परनीत्याऽपि, अर्थपरिच्छेदानुभवसंस्कारप्रसूतो नास्तिताविकल्पस्तत्प्रसूतत्वादेवार्थपरिच्छेदानुभवसंस्कारप्रसूतत्वादेव, कथं स्वातन्त्र्यं परिहरति भावमात्रवस्त्वनुभवपारतन्त्र्यासिद्धेः, इति चिन्तनीयम्। एतदेव भावयति– **अन्यथाभूतेऽर्थे** भावमात्रे, तथा उभयविकल्पजनकत्वेन, परिच्छेदानुभवसंस्कारानुपपत्तेः कारणात्, **अतथाभूताच्च** ततस्तथापरिच्छेदानुभवसंस्कारात्, **न नास्तिताविकल्पप्रसूतिः**, न हि शुक्लपरिच्छेदानुभवसंस्कारात् पीतविकल्पप्रसूतिरिति भावनीयम्। **एतेनेत्यादि**। एतेनाऽनन्तरोदितेन न्यायेन, यदि प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव स्वलक्षणरूपासु, लब्धप्रतिष्ठं वर्तते, ततस्तासामेव पदार्थमात्राणाम्, अवगमो युक्तः।कुत इत्याह– **तत्रेत्यादि**। तत्र तासु पदार्थमात्रासु, व्यापारसंभवात् प्रत्यक्षस्य, अव्यापारेऽपि न विद्यते व्यापारो यस्मिन् प्रक्रमात् प्रत्यक्षस्य तदव्यापारं विषयान्तरमभावादि तस्मिन्नपि तद्विषयेऽपि, परिच्छेदेऽभ्युपगम्यमाने सामर्थ्यात् प्रत्यक्षस्यैव। किमित्याह– **रूपप्रवृत्तेऽपि** परिच्छेदकत्वेन प्रत्यक्षे, रसावसायो रसपरिच्छेदः। किमित्याह– **अशक्यपरिहारः संपद्येत** अव्यापारेऽपि विषये तत्परिच्छेदसिद्धेरित्यभिप्रायः, इत्येतद् यदुच्यते परैः स्याद्वादभङ्गादौ दिवाकरादिभिः, तदपि प्रतिक्षिप्तं निराकृतमेवेति। कुत इत्याह– **पदार्थमात्राणामेवोक्तवद्भावाभावात्मकत्वात्** कारणात्। इत्थं चैतदङ्गीकर्तव्यमित्याह– **अन्यथा तन्मात्रतानुपपत्तेः** पदार्थमात्रतानुपपत्तेः। कथमित्याह– **इतरेत्यादि**। इतरेतराभावात्मकत्वे सति, तत्तद्भावसिद्धेः पदार्थमात्राणां पदार्थमात्रभावसिद्धेः, अन्यथा तत्सांकर्यमनिवारणीयमित्यर्थः॥

**ततश्च प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव लब्धप्रतिष्ठं तासामेवावगमो युक्तस्तत्र व्यापारसम्भवादित्यत्राविसंवाद एव, किन्तु यथावस्थितानामवगमे कथमेकरूपताऽवगमस्य? इति चिन्तनीयम्। अभावे व्यापाराभावादिति चेत्। न, भावानुविद्धत्वेन**

चित्रं नामेत्यर्थः, तद्भेदसिद्धेः अक्रमादधिकृतसामर्थ्यस्य स्वभावभेद-सिद्धेः, इत्येवमुक्तनीत्या, भावाभावात्मकवस्तुप्रभवमेव तदधिकृतविक-ल्पद्वयम्। कुत इत्याह- **पारम्पर्येण तन्निमित्तत्वात्** तदुद्भवाद् निर्विक-ल्पकादुत्पत्तेरिति, न हि शुक्लवस्तुप्रभवादविकल्पाच्छुक्लपीतविकल्पद्व-यप्रभव इत्यालोचनीयम्। अत इत्यादि। अतोऽस्मात् कारणात्, अत्यन्तसूक्ष्मधिय इत्थमालोचकस्य, किं नास्थामनोरथं पूरयतीति वाच्यं पूरयत्येवेत्यर्थः ॥

**यदपि चोक्तम्-यतोऽभावस्य कृत्यक्रियासूपरतव्यापारत-याऽभावत्वमिति; एतदपि न नो बाधायै, पररूपेणार्थक्रियाऽक-रणात्, तद्रूपस्य च तत्राऽभावात्। ततश्च यद्यसावपि कार्यक्रि-यासु कक्षां बध्नीयात् को भावादभावस्य भवता विशेषो दर्शितः स्यादित्येतदप्यत्राऽनवकाशमेव, तथा कार्यक्रियाऽकरणा-दिति। अतो व्युपरतेऽप्यक्षव्यापारेऽर्थपरिच्छेदानुभवसंस्का-रप्रसूतो नास्तिताविकल्पस्तत्प्रसूतत्वादेव कथं स्वातन्त्र्यं परि-हराति? इति चिन्तनीयम्, अन्यथाभूतेऽर्थे तथापरिच्छेदानुभव-संस्कारानुपपत्तेः, अतथाभूताच्च ततो न नास्तिताविकल्पप्रसू-तिरिति भावनीयम्। एतेन यदि प्रत्यक्षं प्रमाणं पदार्थमात्रा-स्वेव लब्धप्रतिष्ठं तासामेवावगमो युक्तस्तत्र व्यापारसम्भवात् अव्यापारेऽपि परिच्छेदे रूपप्रवृत्तेऽपि रसावसायोऽशक्यपरि-हारः संपद्येतेति यदुच्यते परैः, तदपि प्रतिक्षिप्तमिति, पदा-र्थमात्राणामेवोक्तवद्भावाभावात्मकत्वात्, अन्यथा तन्मात्रता-नुपपत्तेः, इतरेतराभावात्मकत्वे तत्तद्भावसिद्धेः ॥**

यदपि चोक्तं पूर्वपक्षे, यतोऽभावस्य कृत्याक्रियासूपरतव्यापार-तयाऽभावत्वमिति। एतदपि न नः नास्माकम्, बाधायै। कुत इत्याह- **पररूपेणाऽर्थक्रियाऽकरणात्, तद्रूपस्य च** पररूपस्य च, **तत्र** वस्तुनि, **अभावात्। ततश्च यद्यसावपि कार्यक्रियासु कक्षां बध्नीयात् को भा-वादभावस्य भवता विशेषो दर्शितः स्यादित्येतदप्यत्र**ोदितपक्षे, **अन-**

वकाशमेव । कुत इत्याह– **तथा** तेन पररूपभावप्रकारेण, कार्यक्रियाऽकरणादिति । अतो व्युपरतेऽप्यक्षव्यापारे परनीत्याऽपि, अर्थपरिच्छेदानुभवसंस्कारप्रसूतो नास्तिताविकल्पस्तत्प्रसूतत्वादेवार्थपरिच्छेदानुभवसंस्कारप्रसूतत्वादेव, कथं स्वातन्त्र्यं परिहरति भावमात्रवस्त्वनुभवपारतन्त्र्यासिद्धेः, इति चिन्तनीयम् । एतदेव भावयति– **अन्यथाभूतेऽर्थे** भावमात्रे, तथा उभयविकल्पजनकत्वेन, परिच्छेदानुभवसंस्कारानुपपत्तेः कारणात्, अतथाभूताच्च ततस्तथापरिच्छेदानुभवसंस्कारात्, न नास्तिताविकल्पप्रसूतिः, न हि शुक्लपरिच्छेदानुभवसंस्कारात् पीतविकल्पप्रसूतिरिति भावनीयम् । **एतेनेत्यादि** । एतेनाऽनन्तरोदितेन न्यायेन, यदि प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव स्वलक्षणरूपासु, लब्धप्रतिष्ठं वर्तते, ततस्तासामेव पदार्थमात्राणाम्, अवगमो युक्तः।कुत इत्याह– **तत्रेत्यादि** । तत्र तासु पदार्थमात्रासु, व्यापारसंभवात् प्रत्यक्षस्य, अव्यापारेऽपि न विद्यते व्यापारो यस्मिन् प्रक्रमात् प्रत्यक्षस्य तदव्यापारं विषयान्तरमभावादि तस्मिन्नपि तद्विषयेऽपि, परिच्छेदेऽभ्युपगम्यमाने सामर्थ्यात् प्रत्यक्षस्यैव । किमित्याह– **रूपप्रवृत्तेऽपि** परिच्छेदकत्वेन प्रत्यक्षे, रसावसायो रसपरिच्छेदः । किमित्याह– **अशक्यपरिहारः संपद्येत** अव्यापारेऽपि विषये तत्परिच्छेदसिद्धेरित्यभिप्रायः, इत्येतद् यदुच्यते परैः स्याद्वादभङ्गादौ दिवाकरादिभिः, तदपि प्रतिक्षिप्तं निराकृतमेवेति । कुत इत्याह– **पदार्थमात्राणामेवोक्तवद्भावाभावात्मकत्वात्** कारणात् । इत्थं चैतदङ्गीकर्तव्यमित्याह– **अन्यथा तन्मात्रतानुपपत्तेः** पदार्थमात्रतानुपपत्तेः । कथमित्याह– **इतरेत्यादि** । इतरेतराभावात्मकत्वे सति, तत्तद्भावसिद्धेः पदार्थमात्राणां पदार्थमात्रभावसिद्धेः, अन्यथा तत्सांकर्यमनिवारणीयमित्यर्थः ॥

**ततश्च प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव लब्धप्रतिष्ठं तासामेवावगमो युक्तस्तत्र व्यापारसम्भवादित्यत्राविसंवाद एव, किन्तु यथावस्थितानामवगमे कथमेकरूपताऽवगमस्य ? इति चिन्तनीयम् । अभावे व्यापाराभावादिति चेत् । न, भावानुविद्धत्वेन**

तस्य व्यापाराभावासिद्धेः, यथावस्थितार्थप्रकाशनस्वभावत्वात्, तासां च तथाऽवस्थितत्वात्; अन्यथा तद्ग्रहणायोगात्। एवं चाव्यापारेऽपि परिच्छेदे रूपप्रवृत्तेऽपि रसावसायोऽशक्यपरिहारः संपद्येतेत्येतदुक्तिमात्रम्, अभिमतविषये व्यापारस्य दर्शितत्वात्। न चैवमनभिमते रसादावसौ, तस्य तत्प्रकाशनस्वभावत्वासिद्धेः, इति न तत्र रसावसायापत्तिरेव, कुतोऽस्याशक्यपरिहारता? इति। अतो भावमात्रस्यैवाभावत्वानुपपत्तेः, लोकानुभवयुक्तिविरोधात्, अन्यविवेकविशिष्टतायाश्च परपक्षेऽयोगात्, तुच्छत्वेन तस्य तेन संबन्धानुपपत्तेः, तादात्म्यतदुत्पत्त्यभावात्, विवेकस्य वस्तुताशक्तेः, अप्रतिबद्धस्य च विशेषणत्वायोगात्, अतिप्रसङ्गात्, उभयरूपमेव तदिति प्रतिपत्तव्यम्, अन्यथा तदनुपपत्तेरिति॥

ततश्चेत्यादि। ततश्चैवं च सति, प्रत्यक्षं प्रमाणं पदार्थमात्रास्वेव लब्धप्रतिष्ठं तासामेवावगमो युक्तस्तत्र व्यापारसंभवादित्यत्राऽविसंवाद एव वस्तुस्थित्याऽऽवयोः, किन्तु यथावस्थितानां पदार्थमात्राणाम्, अवगमे कथमेकरूपताऽवगमस्योभयरूपत्वात् तासाम्, इति चिन्तनीयमेतत्। पराभिप्रायमाह— अभावे व्यापाराभावादिति चेत्, एकस्वरूपताऽवगमस्य। इत्येतदाशङ्क्याह— नेत्यादि। न नैतदेवम्, भावानुविद्धत्वेन हेतुना, तस्याऽभावस्य, व्यापाराभावासिद्धेस्तत्रावगमस्येति। असिद्धिमेवाह— तथावस्थितार्थप्रकाशनस्वभावत्वात् अवगमस्येति प्रक्रमः, तासां च पदार्थमात्राणां, तथोभयरूपतयाऽवस्थितत्वात्। इत्थञ्चैतदङ्गीकर्त्तव्यमित्याह— अन्यथा उभयरूपतानभ्युपगमे, तद्ग्रहणायोगात् पदार्थमात्राणां ग्रहणायोगात्, भावमात्रतयेति भावः। एवं च सति अव्यापारेऽपि परिच्छेदे रूपप्रवृत्तेऽपि रसावसायोऽशक्यपरिहारः संपद्येतेत्येतत् पूर्वपक्षोदितम्, उक्तिमात्रं निरर्थकम्। कुत इत्याह— अभिमतविषये अभावाख्ये, व्यापारस्यावगमसंबन्धिनः, दर्शितत्वात्। न चैवमित्यादि। न चैवमभाववत्, अनभिमते रसादौ

विषये, असाववगमव्यापारः। कुत इत्याह– **तस्येत्यादि**। तस्य प्रक्रमाद् रूपावगमस्य, तत्प्रकाशनस्वभावत्वासिद्धेः रसप्रकाशनस्वभावत्वासिद्धेः, इत्येवम्, न तत्र रसावसायापत्तिरेवातत्स्वभावतया; कुतोऽस्य रसावसायस्य, अशक्यपरिहारतेति नैवेत्यर्थः । **अत इत्यादि**। अतः स्थितमेतदुभयरूपमेव तदिति प्रतिपत्तव्यमिति योगः । हेतूनाह— **भावमात्रस्यैव** अभावाविशिष्टस्य, अभावत्वानुपपत्तेः; अनुपपत्तिश्च लोकानुभवयुक्तिविरोधात्, भावस्य ह्यभावत्वे लोकादिविरोधः प्रकटः। अन्यविवेकविशिष्टो भावोऽभाव इति मोहापोहायाह–**अन्यविवेकविशिष्टतायाश्च** भावगतायाः, परपक्षेऽयोगात्। अयोगे कारणमाह–**तुच्छत्वेन** तस्याऽन्यविवेकाभावस्य, तेन भावेन सह, संबन्धानुपपत्तेः; अनुपपत्तिश्च तादात्म्यतदुत्पत्त्यभावाद् भावविवेकयोरिति। इहैव युक्तिमाह– **विवेकस्य वस्तुताशक्तेः** प्रतिबन्धासिद्ध्यैव। अप्रतिबद्ध एवायं विशेषणं भविष्यतीत्याशङ्कानिरासार्थमाह–**अप्रतिबद्धस्य च** अन्यविवेकस्य, विशेषणत्वायोगाद् भावं प्रति; अयोगश्चातिप्रसङ्गाद् यस्य कस्यचिद् विशेषणत्वापत्तेः। अत उभयरूपमेव भावाभावारूपतया, तद् वस्तु, इत्येवम्, प्रतिपत्तव्यम्। अन्यथैवमनभ्युपगमे, तदनुपपत्तेर्वस्त्वनुपपत्तेरिति ॥

आह–एवमप्यस्तिनास्तीतिविकल्पौ स्वस्वरूपनियतौ न युज्येते, तत्त्वतः शबलवस्तुबलोत्पत्तेरिति। उच्यते– को वा किमाह ?, किन्तु नेमौ स्वस्वरूपनियतावेव, क्षयोपशमभेदात्, प्रधानोपसर्जनभावत इतरेतराक्षेपेण प्रवृत्तेरिति ।

उक्तं च—

"अयमस्तीति यो ह्येष भावे भवति निश्चयः ।
नैष वस्त्वन्तराभावसंवित्त्यनुगमादृते ॥ १ ॥
नास्तीत्यपि न संवित्तिर्न वस्त्वनुगमं विना ।
ज्ञानं न जायते किञ्चिदुपष्टम्भनवर्जितम्" ॥२॥ इति ।

एतेन यौगपद्यमपि प्रत्युक्तम्, क्षयोपशमवैचित्र्यादिति ॥

आहेत्यादि। आहैवमप्यस्तिनास्तीतिविकल्पौ यथोदितौ, स्वस्वरूपनियतौ प्रत्येकरूपतया, न युज्येते। कुत इत्याह— तत्त्वतः परमार्थेन, शबलवस्तुबलोत्पत्तेः सदसद्रूपवस्तुसामर्थ्योत्पत्तेर्द्वयोरपीति। उच्यते अत्र समाधिः, को वा किमाह इत्थमेवैतत्, किन्तु नेमौ अस्तिनास्तीतिविकल्पौ, स्वस्वरूपनियतावेवैकान्ततः प्रत्येकरूपतया। कुत इत्याह— क्षयोपशमभेदाद् द्रव्यादिनिमित्तात्, प्रधानोपसर्जनभावतः इतरेतराक्षेपेणाऽस्तित्वाद्यपेक्षया प्रवृत्तेस्तयोरिति। उक्तं चान्यैरपि, अयमस्तीत्येवम्, यो ह्येष भावे सत्तारूपे, भवति निश्चयस्तदुत्थः, नैष भवति, वस्त्वन्तराभावसंवित्त्यनुगमादृते तत्तदभावसंवित्पूर्वक इत्यर्थः। नास्तीत्यपि च संवित्तिर्न वस्त्वनुगमं विना तुच्छाऽसदाश्रयैव, एवं विज्ञानं न जायते, किंचिदुपष्टम्भनवर्जितं निरालम्बनमिति। एतेनेत्यादि। एतेन तत्त्वतः क्षयोपशमभेदनिबन्धनगर्भेणाऽनन्तरोदितपरिहारेण, यौगपद्यमप्यनन्तरोदितविकल्पयोः, अपिशब्दादेकत्वमपि निमित्ताभेदद्वाराऽऽयातम्, प्रत्युक्तं निराकृतम्। कुत इत्याह— क्षयोपशमवैचित्र्यात् स ह्यनेकधर्मात्मके वस्तुनि कस्यचित् कश्चिद् यस्तथा प्राथम्यादिभेदेन तद्धेतुरिति ॥

यच्चोक्तम्— न च कार्यद्वारेणापि सदसद्रूपं वस्तु प्रतिपत्तुं शक्यते, यतो नोभयरूपं कार्यमुपलभ्यत इत्यादि। एतदप्यनवकाशम्, वस्तुस्थित्योभयरूपस्योपलम्भस्य साधितत्वात्। न च तत् कार्यकरणे प्रवर्तमानं केनचिदाकारेण करोति, केनचिद् न करोति, एकस्य करणाकरणविरोधादित्याद्यप्यसारम्, विरोधासिद्धेः। तथाहि— पर्यायात्मना करोति, द्रव्यात्मना न करोतीति कुत एकस्य करणाकरणविरोधः? इति। अथवा स्वकार्यकर्तृत्वेन करोति, कार्यान्तराकर्तृत्वेन न करोति, अतः केनाचिदाकारेण करोति, केनचिद् न करोतीति कोऽत्र विरोधः?॥

अधिपस्त्वीशो नेता परिवृढोऽधिभूः ॥ २२ ॥
पतीन्द्रस्वामिनाथार्याः प्रभुर्भर्तेश्वरो विभुः ।
ईशितेनो नायकश्च

अधिपातीति अधिपः ॥ १ ॥ ईष्टे ईशः ॥ २ ॥ नयति नियुङ्क्ते नेता ॥३॥ परिवर्हति परिवृंहति वा परिवृढः "क्षुब्धविरिब्ध-" ॥४।४।७०॥ इति साधुः॥४॥ अधि उपरि भवति अधिभूः ॥ ५ ॥ २२ ॥ पातीति पतिः "पातेर्वा" ॥ (उणा--६५९) ॥ इति किदतिः ॥६॥ इन्दनाद् इन्द्रः "भीवृधि-" ॥ (उणा--३८७) ॥ इति रः ॥ ७ ॥ स्वमस्यास्तीति स्वामी "स्वाद् मिन्नीशे" ॥ ७।२।४९ ॥ इति मिन् दीर्घश्च ॥ ८ ॥ नाथति ईष्टे नाथः॥९॥ अर्यते सेव्यते अर्यः "स्वामिवैश्येऽर्यः" ॥ ५।१।३३ ॥ इति साधुः ॥ १० ॥ प्रभवति प्रभुः "शंसंस्वयंविप्राद् भुवो डुः" ॥ ५।२।८४ ॥ इति डुः ॥ ११ ॥ बिभर्ति पुष्णाति भर्ता ॥ १२ ॥ ईशनशीलः ईश्वरः ॥ १३ ॥ विभवति विभुः ॥ १४॥ ईष्टे ईशिता ॥ १५ ॥ एति स्वामित्वमिनः "जीण्शी-" ॥ (उणा--२६१) ॥ इति नक् ॥ १६ ॥ नयति नायकः ॥ १७ ॥

नियोज्यः परिचारकः ॥ २३ ॥
डिङ्गरः किङ्करो भृत्यश्चेटो गोप्यः पराचितः ।
दासः प्रेष्यः परिस्कन्दो भुजिष्यपरिकर्मिणौ ॥ २४ ॥
परान्नः परपिण्डादः परजातः परैधितः ।

नियोक्तुं शक्यो नियोज्यः॥१॥ परिचरति परिचारकः, प्रतिचरोऽपि॥२॥२३॥ डिप्यते क्षिप्यते डिङ्गरः "जठरकक्कर-" ॥ (उणा--४०३) ॥ इत्यादिशब्दाद् निपात्यते ॥३॥ किं करोमीत्याज्ञां प्रतीक्षते किंकरः "किंयत्तद्बहोरः" ॥५।१।१०१॥ इति अः ॥ ४ ॥ भरणीयो भृत्यः "भृगोऽसंज्ञायाम्" ॥ ५ । १ । ४५ ॥ इति क्यप् ॥ ५ ॥ चेटति चेटः ॥ ६ ॥ गोपनीयो गोप्यः ॥ ७ ॥ परैराचीयते बध्यते पराचितः ॥ ८ ॥ दासते सुखं स्वामिनेऽर्चि दासः ॥ ९ ॥ प्रेषणीयः प्रेष्यः ॥ १० ॥ परिस्कन्दते आक्रम्य नियुज्यते परिस्कन्दः ॥ ११ ॥ भुङ्क्ते स्वाम्युच्छिष्टं भुजिष्यः "रुचिभुजिभ्यां किष्यः" ॥ (उणा—३८४) ॥ इति किष्यः ॥ १२ ॥ परितः कर्माऽस्यास्ति परिकर्मी, शिखादित्वादिन् ॥ १३ ॥ २४ ॥ परस्याऽन्नमस्य परान्नः ॥ १४ ॥ परस्य पिण्डमत्ति परपिण्डादः ॥ १५ ॥ परेण जातः परजातः ॥ १६ ॥ परैरेध्यते वर्ध्यते परैधितः ॥ १७ ॥ परान्नादयश्चत्वारः पृथगेकार्था इत्यन्ये ॥

भृतके भृतिभुग् वैतानिकः कर्मकरोऽपि च ॥ २५ ॥

भ्रियते स्म स्वार्थे के भृतकः, तत्र ॥ १ ॥ भृतिर्वेतनं भुङ्क्ते भृतिभुक् ॥ २ ॥

वेतनेन जीवति वैतनिकः " वेतनादेर्जीवति" ॥ ६ । ४ । १५ ॥ इतीकण् ॥ ३ ॥ कर्म करोति कर्मकरः " भृतौ कर्मणः" ॥ ५।१।१०४ ॥ इति टः ॥ ४ ॥ २५ ॥

स निर्भृतिः कर्मकारः

स भृतको निर्वेतनः कर्म कुर्वन् कर्मकारः ॥ १ ॥

भृतिः स्याद् निष्क्रयः पणः ।
कर्मण्या वेतनं मूल्यं निर्वेशो भरणं विधा ॥ २६ ॥
भर्मण्या भर्म भृत्या च

भ्रियतेऽनया भृतिः ॥ १ ॥ निष्क्रयणं निष्क्रयः ॥ २ ॥ पण्यते आभाष्यते पणः "पणेर्माने" ॥ ५ । ३ । ३२ ॥ इत्यल् ॥ ३ ॥ कर्माणि साधुः कर्मण्या ॥ ४ ॥ वीयतेऽश्यते वेतनं " वीपतिंपटिभ्यस्तनः" ॥ ( उणा–२९२ ) ॥ इति तनः ॥ ५ ॥ मूलेन आनाम्यं मूल्यं " हृद्यपद्य-" ॥ ७ । १ । ११ ॥ इति यः ॥ ६ ॥ निर्विश्यते भुज्यते निर्वेशः ॥ ७ ॥ भ्रियतेऽनेन भरणम् ॥ ८ ॥ विधीयतेऽनया विधा ॥ ९ ॥ २६ ॥ भर्मणि साधुर्भर्मण्या ॥ १० ॥ भ्रियतेऽनेन भर्म " मन् "॥ ( उणा– ९११ ) ॥ इति मन् ॥ ११ ॥ भ्रियतेऽनया भृत्या "भृगो नाम्नि" ॥ ५ । ३ । ९८ ॥ इति क्यप् ॥ १२ ॥

भोगस्तु गणिकाभृतिः ।

भुज्यते भोगः , गणिकाया भृतिर्वेतनम् ॥ १ ॥

शेषश्चात्र– भाटिस्तु गणिकाभृतौ ॥

खलपूः स्याद् बहुकरः

खलं पुनाति खलपूः ॥ १ ॥ बहु करोति बहुकरः संमार्जकः, बहुधान्यार्जक इत्यन्ये ॥ २ ॥

भारवाहस्तु भारिकः ॥ २७ ॥

भारं वहति भारवाहः ॥ १ ॥ भारोऽस्त्यस्य भारिकः ॥ २ ॥ २७ ॥

वार्तावहे वैवधिकः

वृत्तिर्जीविकाऽस्त्यस्यां वार्ता अन्नाद्यम् , वार्ताया वहो वार्तावहः, तत्र ॥ १ ॥ वधो भारः पर्याहारो वा तेन हरति वैवधिकः, विवधवीवधिकावपि; " विववीवधाद् वा" ॥ ६ । ४ । २५ ॥ इतीकण् ॥ २ ॥

भारे विवधवीवधौ ।

विवध्यते विवधः "न जनवधः" ॥ ४ । ३ । ५४ ॥ इति घञि वृद्धेरभावः, घञि उपसर्गस्य दीर्घत्वे वीवधः ॥ २ ॥ ३ ॥

काचः शिक्य तदालम्बः ।

कच्यते बध्यतेऽनेन काचः ॥ १ ॥ शक्नोति वोढुं शिक्यम् "शिक्यास्याढ्य-" ॥ (उणा-३६४) ॥ इति यान्तो निपात्यते। तस्य भारस्याऽऽलम्बनं तदालम्बनं तदालम्बो यत्र रज्जुपञ्जरे वोढव्यमास्ते ॥ २ ॥

भारयष्टिर्विहङ्गिका ॥ २८ ॥

भारोद्वहनार्था चतुर्दण्डिका यष्टिर्भारयष्टिः शिक्याधारः, स्कन्धग्राह्यः लगुड इति द्रमिलाः; विहङ्गप्रतिकृतिश्चर्म्मादिमयी विहङ्गिका, या भित्त्यादौ लम्बमाना स्थाप्यते, प्रयाणके च संधार्यते । विहङ्गमेत्येके ॥ १ ॥ २८ ॥

शूरश्चारभटो वीरो विक्रान्तश्च

शूरयते शूरः ॥ १ ॥ चारेण गमनेन भटति युद्धमाकाङ्क्षति चारभटः ॥ २ ॥ अजति क्षिपति शत्रून् वीरः "ऋज्यजि-" ॥ ( उणा-३८८ ) ॥ इति रक्, वीरयत इति वा ॥ ३ ॥ विक्रामति उत्सहते स्म विक्रान्तः ॥ ४ ॥

अथ कातरः ।

दरितश्चकितो भीतो भीरुभीरुकभीलुकाः ॥ २९ ॥

कायति कातरः "अनिकाभ्यां तरः" ॥ (उणा-४३७) ॥ इति तरः, ईषत्तरति वा कातरः ॥१॥ दरः संजातोऽस्य दरितः॥२॥चकति बिभेति स्म चकितः॥३॥बिभेति स्म भीतः ॥ ४ ॥ बिभेतीत्येवंशीलो भीरुः, भीरुकः, भीलुकः "भियो रुरुकलुकम्" ॥५।२।७६॥ इति साधवः ॥५॥६॥७॥ "अधीरे कातरः" इत्यमरः॥२९॥

शेषश्चात्र—

त्रस्नुत्रस्तौ तु चकिते ॥

विहस्तव्याकुलौ व्यग्रे

विगतौ किङ्कर्तव्यतामूढत्वाद् हस्तावस्य विहस्तः ॥ १ ॥ विशेषेणाकुलो व्याकुलः ॥ २ ॥ विगतमग्रमस्य व्यग्रस्तत्र विशेषेण अगति वा ॥ ३ ॥

कान्दिशीको भयद्रुते ।

कां दिशं व्रजामि इत्याकुलः कान्दिशीकः, पृषोदरादित्वात्साधुः, भयेन द्रुतः पलायितो भयद्रुतः, तत्र ॥ १ ॥

उत्पिञ्जलसमुत्पिञ्जपिञ्जला भृशमाकुले ॥ ३० ॥

उत्पिञ्जयतीति उत्पिञ्जलः ॥१॥ समुत्पिञ्जयति समुत्पिञ्जः ॥ २ ॥ पिञ्जयति पिञ्जलः, भृशमत्यर्थमाकुले ॥ ३ ॥ ३० ॥

**महेच्छे तूद्भटोदारोदात्तोदीर्णमहाशयाः ।**
**महामना महात्मा च**

महती इच्छा अस्य महेच्छस्तत्र ॥ १ ॥ उद्भटति उद्भटत्युद्भटः ॥ २ ॥ साधुभिरुदर्यते गम्यते उदारः ॥ ३ ॥ उत्कर्षेणादीयते गम्यते उदात्तः ॥ ४ ॥ उदीर्यते स्म उदीर्णः ॥ ५ ॥ महानाशयोऽस्य महाशयः ॥ ६ ॥ महद् मनोऽस्य महामनाः ॥ ७ ॥ महान् आत्माऽस्य महात्मा ॥ ८ ॥

**कृपणस्तु मितम्पचः ॥ ३१ ॥**
**कीनाशस्तद्धनः क्षुद्रकदर्यदृढमुष्टयः ।**
**किम्पचानः**

कल्पते कृपणः "कॄगॄपॄकृपि-" ॥ ( उणा–१८८ ) ॥ इति अणक् ॥ १ ॥ मितं पचति मितंपचः "परिमाणार्थमितनखात् पचः" ॥ ५ । १ । १०९ ॥ इति खः ॥२॥३१॥ कनति दीप्यते तृष्णया कीनाशः "कनेरीश्चातः" ॥ ( उणा–५३४ ) ॥ इत्याशः ॥ ३ ॥ तदेव धनमस्य तद्धनः ॥ ४ ॥ क्षुद्यतेऽल्पत्वात् क्षुद्रः "ऋज्याजि-" ॥ ( उणा–३८८ ) ॥ इति रक् ॥ ५ ॥ कुत्सितोऽर्यः स्वामी कदर्यः ॥ ६ ॥ दृढा मुष्टिरस्य दृढमुष्टिः ॥ ७ ॥ किञ्चित् पचति किम्पचानः "मुमुचान-" ॥ ( उणा–२७८ ) ॥ इति बहुवचनादानान्तो निपात्यते ॥ ८ ॥

**दयालुस्तु कृपालुः करुणापरः ॥ ३२ ॥**
**सूरतः**

दयत इत्येवंशीलो दयालुः "शीङ्श्रद्धानिद्रा-" ॥ ५ । २ । ३७ ॥ इत्यालुः ॥ १ ॥ कृपाऽस्त्यस्य कृपालुः "कृपाहृदयादालुः" ॥ ७ । २ । ४२ ॥ इत्यालुः ॥ २ ॥ करुणायां परः करुणापरः ॥३॥३२॥ सुष्ठु रमते कृपायां सूरतः "पुतपित्त-" ॥ ( उणा–२०४ ) ॥ इति तान्तो निपात्यते ॥ ४ ॥

**अथ दया शूकः कारुण्यं करुणा घृणा ।**
**कृपाऽनुकम्पाऽनुक्रोशः**

दयन्तेऽनया दया, भिदादित्वादङ् ॥ १ ॥ शवन्ति गच्छन्ति परदुःखप्रहाणेच्छामनेन शूकः पुंक्लीबलिङ्गः "घुयुहिपितुशोर्दीर्घश्च" ॥ ( उणा–२४ ) ॥ इति कः ॥ २ ॥ करुणस्य भावः कारुण्यम्, करुणैव वा भेषजादित्वात् स्वार्थे ट्यण् ॥३॥ किरति चित्तं करुणा "ऋकृवृ-" ॥ ( उणा–१९६ ) ॥ इत्युणः ॥ ४ ॥ घ्रियन्तेऽनया घृणा; घृण्यन्तेऽनयेति वा ॥ ५ ॥ कृपणं कृपा "मृगयेच्छा-"॥५।३।१०१॥

इति साधुः ॥ ६ ॥ अनुकम्पनं अनुकम्पा ॥ ७ ॥ अनुक्रोशन्ति समदुःखा भवन्त्य-
नेन अनुक्रोशः ॥ ८ ॥

हिंस्रे शरारुघातुकौ ॥ ३३ ॥

हिंसनशीलो हिंस्रः " स्म्यजसहिंस- " ॥ ५।३।७९ ॥ इति रः, तत्र ॥ १ ॥
शृणातीत्येवंशीलः शरारुः " शृवन्देरारुः " ॥ ५।२।३५ ॥ इत्यारुः ॥ २ ॥ हन्ती-
ति घातुकः " शृकमगम- " ॥५।२।४०॥ इत्युकण् ॥ ३ ॥ ३३ ॥

व्यापादनं विशरणं प्रमयः प्रमापणं
निर्ग्रन्थनं प्रमथनं कदनं निबर्हणम् ।
निस्तर्हणं विशसनं क्षणनं परासनं
प्रोज्जासनं प्रशमनं प्रतिघातनं वधः ॥ ३४ ॥
प्रवासनोद्वासनघातनिर्वा-
सनानि संज्ञप्तिनिशुम्भहिंसाः ।
निर्वापणालम्भनिसूदनानि
निर्यातनोन्मन्थसमापनानि ॥ ३५ ॥
अपासनं वर्जनमारपिञ्जा-
निष्कारणक्राथविशारणानि ।

अत्र अहिंसार्था अपि धातवः उपसर्गवशाद् हिंसार्था ज्ञेयाः, अकर्मकास्तु
णिजा सकर्मकाः; व्यापादनमिति विआङ्पूर्वात् पदेर्णिग्यनट् ॥ १ ॥ शृश् हिंसायां
विशरणम् ॥२॥ मीग्श् हिंसायामलि प्रमयः पुंक्लीबलिङ्गः " कदनं प्रमयोऽस्त्रियाम्"
इत्यमरशेषः ॥ ३ ॥ मीनातेरेव स्वार्थे णिचि " मिग्मीगोऽखलचलि " ॥४।२।८॥
इत्यात्वेऽनटि च प्रमापणम् ॥ ४ ॥ ग्रथुङ् कौटिल्ये निर्ग्रन्थनम् ॥ ५ ॥ मथे वि-
लोडने प्रमथनम् ॥ ६ ॥ कदेः सौत्रस्य कदनम् ॥ ७ ॥ निपूर्वाद् बृहेर्बर्हेर्वा निब-
र्हणम् ॥ ८ ॥ तृहेर्हिंसार्थस्य निष्पूर्वस्य, स्तृहेर्वा निपूर्वस्य निस्तर्हणम् ॥ ९ ॥ शसू
हिंसायां विशसनम् ॥ १० ॥ क्षणूग् हिंसायां क्षणनम् ॥ ११ ॥ परापूर्वस्याऽस्यतेः
परासनम् ॥ १२ ॥ जसण् हिंसायां प्रोज्जासनम् ॥ १३ ॥ प्रशमेः प्रशमनम् ॥१४॥
हन्तेः स्वार्थणिजन्तस्य प्रतिघातनम् ॥ १५ ॥ हननं वधः " हनो वा वध् च "
॥ ५।३।४६ ॥ इत्यल् ॥ १६ ॥ ३४ ॥ प्रवसतः प्रयुक्तिः प्रवासनम्, एवमुद्वासनम्
॥ १७ ॥ १८ ॥ हननं घातः ॥ १९ ॥ निर्वसतः प्रयुक्तिर्निर्वासनम् ॥ २० ॥
संज्ञपनं संज्ञप्तिः " सातिहेति- " ॥ ५।३।९४ ॥ इति क्तिः ॥२१॥ निशुम्भनं नि-
शुम्भः ॥ २२ ॥ हिंसनं हिंसा ॥ २३ ॥ पैं ओवैं शोषणे इत्यस्य निष्पूर्वस्य णिगि

निर्वापणम् ॥ २४ ॥ आलम्भनमालम्भः ॥ २५ ॥ षूदि क्षरणे निसूदनम् ॥२६॥ निष्पूर्वस्य यतणो णिचि निर्यातनम् ॥ २७ ॥ उन्मथ्नातेर्घञि उन्मन्थः ॥ २८ ॥ संपूर्वस्य आप्नोतेः समापनम् ॥ २९ ॥ ३५ ॥ अपादस्यतेरपासनम् ॥ ३० ॥ वर्ज्यते वर्जनम् ॥ ३१ ॥ मृश् हिंसायां स्वार्थणिचि अलि च मारः ॥ ३२ ॥ पिजुण् हिंसादौ अलि पिञ्जः ॥ ३३ ॥ कृश् हिंसायाम् स्वार्थणिचि निष्कारणम् ॥३४॥ क्रथण् हिंसायां अचि क्राथः ॥ ३५ ॥ शृश् हिंसायां स्वार्थणिचि विशारणम् ॥३६॥

स्युः कर्तने कल्पनवर्धने च

छेदश्च

कृत्यते कर्तनम्, तत्र ॥१॥ कल्प्यते कल्पनम् ॥२॥ वर्ध्यते वर्धनम् ॥ ३ ॥ छेदनं छेदः ॥ ४ ॥

घातोद्यत आततायी ॥ ३६ ॥

घातोद्यतो वधोद्युक्तः संनद्धः सन् यो वधार्थमुद्यतः स आततः, तादृशः सन् एति वधार्थं धावत्याततायी, आततं पलायमानं वा तयते आततायी, वध उपलक्षणं यत्स्मृतिः—

"अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते आततायिनः" ॥ १ ॥ ३६ ॥

स शैर्षच्छेदिकः शीर्षच्छेद्यो यो वधमर्हति ।

शीर्षच्छेदमर्हति शैर्षच्छेदिकः "तमर्हति-" ॥ ६ । ४ । १७७ ॥ इतीकण् ॥ १ ॥ शीर्षच्छेद्यः "शीर्षच्छेदाद् यो वा" ॥६।४।१८४॥ इति यः ॥ २ ॥

प्रमीत उपसम्पन्नः परेतप्रेतसंस्थिताः ॥ ३७ ॥

नामालेख्ययशःशेषो व्यापन्नोपगतौ मृतः ।

परासुः

प्रमीयते स्म प्रमीतः ॥ १ ॥ उपसंपद्यते स्म उपसंपन्नः ॥ २ परैति लोकान्तरे परेतः ॥ ३ ॥ प्रैति स्म प्रेतः ॥ ४ ॥ संतिष्ठते स्म संस्थितः ॥ ५ ॥ ३७ ॥ नामालेख्ययशःशब्देभ्यः परः शेषः, तेन नामशेषः, आलेख्यशेषः, यशःशेषः, नामैव शेषमस्येत्यादि कृत्वा ॥ ६ ॥ ७ ॥ ८ ॥ व्यापद्यते स्म व्यापन्नः ॥ ९ ॥ उपगच्छति स्म उपगतः ॥ १० ॥ म्रियते स्म मृतः ॥ ११ ॥ परागता असवः प्राणा अस्य परासुः ॥ १२ ॥

तदहे दानं तदर्थमौर्ध्वदेहिकम् ॥ ३८ ॥

तस्य मृतस्य अह्नि दिवसे, तमुद्दिश्य दानं पिण्डोदकादि, ऊर्ध्वं देहाद् भवमौ-

र्ध्वदेहिकम्, अध्यात्मादित्वादिकण्, एकदेशविकृतत्वादूर्ध्वदेहिकम्, अनुशतिकादिपाठमताश्रयणे तु उभयपदवृद्धौ और्ध्वदैहिकमपि ॥ १ ॥ ३८ ॥

मृतस्नानमपस्नानं

मृते स्नानं मृतस्नानम्, अपकृष्टं स्नानमपस्नानम् ॥ १ ॥

निवापः पितृतर्पणम् ।

नितरामुप्यते दीयते निवापः, पितॄणां तर्पणम् पितृतर्पणम् ॥ १ ॥

चितिचित्याचितास्तुल्या

चीयते चितिः ॥ १ ॥ चितैव चित्या, मर्तादित्वाद् यः ॥२॥ चीयते चिता ॥ ३ ॥ एते प्रेतदाहार्थे अग्न्याधाने वर्तन्ते ॥

ऋजुस्तु प्राञ्जलोऽञ्जसः ॥ ३९ ॥

अर्ज्यते ऋजुः "अर्जेर्ऋज् च" ॥ ( उणा--७२२ ) ॥ इति उः ॥ १ ॥ प्राञ्जलयति अञ्जलिं प्रबध्नाति प्राञ्जलः, प्राज्यते अभिगम्यते इति वा ॥ २ ॥ अञ्जोऽस्त्यस्य अञ्जसः ॥ ३ ॥ ३९ ॥

दक्षिणे सरलोदारौ

दक्षते दक्षिणः "द्रुहृवृहिदक्षिभ्य इनः" ॥ ( उणा–१९४ ) ॥ इति इनः, तत्र ॥ १ ॥ सरति सरलः "मृदिकन्दि-" ॥ ( उणा–४६५ ) इत्यलः ॥ २ ॥ उदर्यते उदारः ॥ ३ ॥

शठस्तु निकृतोऽनृजुः ।

शठ कैतवे च, शठति शठः, शाम्यतीति वा "शमेर्ढक् च वा" ॥ ( उणा–१६५ ) ॥ इति ठः, एकदेशविकृतत्वात् शण्ठोऽपि ॥ १ ॥ निकृणोति हिनस्ति निकृतः ॥ २ ॥ न ऋजुः अनृजुः ॥ ३ ॥

क्रूरे नृशंसनिस्त्रिंशपापाः

कृन्ततीति क्रूरः "कृतेः कृकृच्छ्रौ च" ॥ ( उणा–३९५ ) ॥ इति रः, तत्र ॥ १ ॥ नॄन् शंसति हिनस्ति नृशंसः ॥ २ ॥ निस्त्रिंश इव घातुकत्वाद् निस्त्रिंशः ॥ ३ ॥ पापमस्यास्ति पापः ॥ ४ ॥

धूर्तस्तु वञ्चकः ॥ ४० ॥

व्यंसकः कुहको दाण्डाजिनिको मायिजालिकौ ।

धूर्वति हिनस्ति धूर्तः "शॄरी-" ॥ ( उणा–२०१ ) इति तः कित् ॥ १ ॥

वञ्चयते वञ्चकः ॥ २ ॥ ४० ॥ व्यंसयति च्छलयति व्यंसकः, विगतावंसौ यस्
व्यंसः, तत्तुल्यो वा ॥ ३ ॥ कुहयते विस्मापयते कुहकः, कुहकमिन्द्रजालं वा य
स्यास्ति ॥ ४ ॥ दण्डश्च अजिनं च दम्भोपलक्षणत्वाद् दण्डाजिनं दम्भः, ते
अन्वेष्टा " दाण्डाजिनिका- " ॥ ७।१।१७१ ॥ इत्यादिना निपात्यते ॥ ५ ॥ म
याऽस्ति अस्य मायी, व्रीह्यादित्वात् इन्, मायाविमायिकावपि ॥ ६ ॥ जाले
चरति जालिकः ॥ ७ ॥

माया तु शठता शाठ्यं कुसृतिर्निकृतिश्च सा॥ ४१ ॥

मातिअनया माया " स्थाछामासा-" ॥ ( उणा--३५७ ) इति यः ॥ १
शठस्य भावः शठता शाठ्यम् ॥२॥३॥ कुत्सिता सृतिर्हिंसार्थे कुसृतिः ॥ ४ ॥ नि
कृष्टा कृतिः निकृतिः ॥ ५ ॥ ४१ ॥

कपटं कैतवं दम्भः कूटं छद्मोपधिश्छलम् ।
व्यपदेशो मिषं लक्षं निभं व्याजः

कम्पयत्यनेन कपटं पुंक्लीबलिङ्गः " कपटकीकटादयः " ॥ ( उणा--१४४ )
इति साधुः, के मूर्ध्नि पटमिवाच्छादकमिति वा ॥ १ ॥ कितवस्य कर्म कैतवं, युवा
दित्वादण् ॥ २ ॥ दम्भनं दम्भः ॥ ३ ॥ कूटयति दहति अनेन कूटं पुंक्ली
बलिङ्गः ॥ ४ ॥ छाद्यते रूपमनेन छद्म " छदेरिस्मन्त्रट्क्वौ " ॥ ४ । २ । ३३
इति मनि ह्रस्वः ॥ ५ ॥ उपधीयते स्फटिकस्येव सिन्दूरमुपधिः, उपधा अपि ॥ ६
छयति छिनत्त्यनेन छलम् " छोर्डग् गादिर्वा " ॥ ( उणा--४७१ ) ॥ इति किद
॥ ७ ॥ व्यपदिश्यते व्यपदेशोऽतद्रूपस्य ताद्रूप्यम् ॥ ८ ॥ क्रीडार्थे वञ्चनेन य
मिषति मिषम् ॥ ९ ॥ स इव लक्ष्यतेऽनेन लक्षं पुंक्लीबलिङ्गः ॥ १० ॥ नित
तदिव भाति निभम् ॥ ११ ॥ व्यजन्ति विक्षिपन्त्यनेन व्याजः स्वरूपाच्छादनम्
यल्लक्ष्यम्--"ध्यानव्याजमुपेत्य चेतयसि किम्" ॥ १२ ॥ मायादयः कपटादयः
एकार्था इत्येके, कपटादयो व्यपदेशादयश्च भिन्नार्था इत्यमरः ॥

अथ कुक्कुटिः ॥ ४२ ॥
कुहना दम्भचर्या च

कुक्कुट इव आचरति कुक्कुटति दम्भेन निभृतं चरति, कुक्कुटनं कुक्कुटि
"स्वरेभ्य इः" ॥ (उणा--६०६) ॥१॥४२॥ कुहयतेऽनया कुहना, दम्भेन परविस्मा
पनार्थं मिथ्याकल्पना ॥ २ ॥ दम्भेन चरणं " समजनिपद् ॥ ५।३।९९
इति क्यप् ॥ ३ ॥

वञ्चनं तु प्रतारणम् ।
व्यलीकमतिसन्धानं

तदन्यत्वादिविकल्पानुपपत्तेः- तयोः प्रथमक्षणस्थितिद्वितीयादिक्षणाऽस्थित्योरन्यत्वादिविकल्पैरघटमानत्वात् क्षणस्थितिधर्मसत्तायाः, तथाहि-तयोः प्रथमक्षणस्थितिद्वितीयादिक्षणाऽस्थित्योरन्यत्वम्, अनन्यत्वम्, अन्यानन्यत्वम्, अवाच्यत्वं वा स्यात्?। अन्यत्वे क्षणान्तरस्थितेरिव प्रस्तुतास्थित्यविरोधात् क्षणास्थितित्वाभावः। अनन्यत्वे प्रथमक्षणेऽप्यस्थितिः, द्वितीयादिष्वपि वा स्थितिः, अन्यथाऽनन्यत्वायोगात्, तयोरैक्ये ह्यनन्यत्वमिति भावनीयम्। अन्यानन्यत्वे विरोधः, सहानवस्थानात्। अवाच्यत्वे स्ववचनविरोधः, अवाच्यत्वेनैव वाच्यत्वात्। **स्यादेतदित्यादि**। स्यादेतदथैवं मन्यसे, द्वितीयादिक्षणास्थितौ सत्यां, प्रथमक्षणस्थितेरभावात् कारणात्, भावे वा प्रथमक्षणस्थितेः, तदनुपपत्तेर्द्वितीयादिक्षणास्थित्यनुपपत्तेः, तस्याऽसावस्थितिरिति कृत्वा। किमित्याह-**प्रतियोग्यभावात्** पक्षद्वयेऽपि, तदन्यत्वादिविकल्पानुपपत्तिः तयोः प्रथमक्षणस्थितिद्वितीयादिक्षणास्थित्योरन्यत्वादिविककल्पाऽघटमानता। एतद्भावनायैवाह-**तथाहीत्यादि**। तथाहीत्युपप्रदर्शने, द्वितीयक्षणे तदेव न भवति यत् प्रथमक्षणेऽभूदिति। उक्तं च धर्मकीर्त्तिना- न तत्र किञ्चिद् भवति न भवत्येव केवलमिति वार्त्तिके॥

**नन्वेवमपि भवनादूर्ध्वमभवनात् तत्कादाचित्कत्वतस्तदुत्पत्तेः, अत एव नाशाद् भवनोन्मज्जनप्रसङ्गः। स्यादेतत्, न भवतीति भवनक्रियाप्रतिषेधमात्रमहेतुकमदः, तत्कथमस्य कादाचित्कत्वादि?। उच्यते- भवनकादाचित्कतया तत्पूर्वकत्वेन तद्धेतुत्वोपपत्तेः, अन्यथा भवनेऽप्युत्पत्त्याद्यभावः, तस्याप्यभवनक्रियाप्रतिषेधमात्रत्वात्, उभयत्र तदतिरिक्तक्रियाऽभावात्, सत्स्वभावादिजन्याजनकत्वेन हेत्वयोगतोऽहेतुकत्वापत्तेश्च। न चायं भवनक्रियाप्रतिषेधो ज्यायान्, विकल्पानुपपत्तेः, स हि भवनस्वभावस्य, अभवनस्वभावस्य वा क्रियेत?। न तावद् भवनस्वभावस्य, अशक्यत्वात्, अन्यथा भवनस्वभावत्वविरोधात्। अभवनस्व-**

भावभवनक्रियाप्रतिषेधे तु प्रयासवैयर्थ्यम्, भवनापत्तिर्वा, इत्येवं च तदेव न भवतीति वाङ्मात्रमेतत्। शब्दार्थानुपपत्तेश्च, तथाहि—तदेवेति भवनस्वभावं परामृश्य न भवतीत्यभिदधतः शब्दार्थविरोधः। यदा न भवति न तदा भवनस्वभावमिति चेत्। अभवनस्वभावं तर्हि न भवतीति तदेवेति न शोभन उपन्यासः। तत् क्षणभवनस्वभावमिति चेत्। कथं द्वितीयक्षणे न भवति?। एकक्षणभवनस्वभावमिति चेत्। न ह्यसावपि नैकः। तदेकक्षणभवनस्वभावमिति चेत्। नासौ तदतिरेकेण कश्चित्। इति निबन्धनाभावतो यत्किञ्चिदेतत्॥

एतदाशङ्क्याह— नन्वेवमपीत्यादि। नन्वेवमपि तदेव न भवतीत्यस्मिन्नपि पक्षे, भवनादूर्ध्वमभवनात् कारणात्, तत्कादाचित्कत्वतस्तस्याऽभवनस्य कादाचित्कत्वेन हेतुना, तदुत्पत्तेरभवनोत्पत्तेः कारणात्, अत एवोत्पत्तेरेव हेतोः। किमित्याह—नाशात् अभवनस्य भवनोन्मज्जनप्रसङ्गः, तदभवननाशान्यथानुपपत्तेरिति भावनीयम्। स्यादेतदित्यादि। अथैवं मन्यसे, न भवतीति भवनक्रियाप्रतिषेधमात्रम्, अहेतुकमद एतत्, तत् कथमस्याऽभवनस्य, कादाचित्कत्वादि हेतुभावाधीनत्वात् कादाचित्कत्वस्य, आदिशब्दात् तन्नाशभवनोन्मज्जनग्रहः। उच्यतेऽत्र समाधिः, भवनकादाचित्कतया कारणेन, तत्पूर्वकत्वेन भवनपूर्वकत्वेन हेतुना, तद्धेतुत्वोपपत्तेः—भवनहेतुत्वोपपत्तेः, अभवनस्य यद्भवनानन्तरं तत् स एव तस्य हेतुरिति। अन्यथेत्यादि। अन्यथैवमनभ्युपगमे, भवनेऽप्युत्पत्त्याद्यभाव उत्पत्तिनाशाभावः। कुत इत्याह—तस्यापि भवनस्य, अभवनक्रियाप्रतिषेधमात्रत्वात् कारणात्। काऽभवनस्य क्रियेत्याशङ्क्याह— उभयत्र भवनेऽभवने च, तदतिरिक्तक्रियाभावाद् भवनाभवनातिरिक्तक्रियाऽभावात्। अभवनस्य नाशत्वेन हेत्वयोग इत्येतदपि समानमित्यभिधातुमाह—सत्स्वभावादिजन्याजनकत्वेन कारणेन, हेत्वयोगतः कारणात्, अहेतुकत्वापत्तेश्च भवनस्य, उत्पत्त्याद्यभाव इति क्रियायोगः, तथाहि—भवनं

जन्योत्पादः, तस्यापि हेतुर्न युज्यत एवेति, स हि सत्स्वभावजन्यजनकः, असत्स्वभावजन्यजनकः, उभयस्वभावजन्यजनकः, अनुभयस्वभावजन्यजनको वा भवेत् ? सर्वथापि दोषः-यदि सत्स्वभावं जन्यं, कथं तज्जनकः ?। अथाऽसत्स्वभावमेव तत्, तथापि कथं तज्जनकः ?। उभयस्वभावत्वे विरोधः। अनुभयस्वभावत्वे अवस्तुता; इत्युत्पादहेत्वभाव इति भावनीयम्। दोषान्तरमाह- **न चायमित्यादि**। न चायं भवनक्रियाप्रतिषेधो ज्यायान् शोभनः। कुत इत्याह-**विकल्पानुपपत्तेः** कारणात्। एनामेवाह-**स हीत्यादिना**। स यस्माद्, भवनक्रियाप्रतिषेधः, भवनस्वभावस्य सतः, अभवनस्वभावस्य वा क्रियेत ? किञ्चातः ? उभयथाऽपि दोष इत्याह-**न तावद् भवनस्वभावस्य भवनक्रियाप्रतिषेधः**। कुत इत्याह- **अशक्यत्वात्**, भवनस्वभावस्य तत्त्वं निषेद्धुमशक्यमिति। अत एवाह- **अन्यथा भवनस्वभावत्वविरोधात् न तत्क्रियानिषेध इति**। अभवनस्वभावभवनक्रियाप्रतिषेधे त्वभ्युपगम्यमाने, प्रयासवैयर्थ्यं यतो नाभवनस्वभावं भवनमिति। तथा भवनापत्तिर्वेति-अभवनस्वभावभवनक्रियाप्रतिषेधे बलाद् भवनापत्तिः। एवं च तदेव न भवतीति वाङ्मात्रमेतत् उक्तवदभवनायोगात्। तथा शब्दार्थानुपपत्तेश्च तदेव न भवतीत्यत्र। एनामेव दर्शयति-**तथाहीत्यादिना**। तथाहीति पूर्ववत्, तदेवेति भवनस्वभावं परामृश्य वस्तु, न भवतीत्यभिदधतः सतः, शब्दार्थविरोधः प्रकट एव, यदा न भवति तत् न तदा भवनस्वभावं सद् न भवति, इत्येवम्, चेत् मन्यसे। एतदाशङ्क्याह- **अभवनस्वभावं तर्हि न भवतीति एवम्**, तदेवेति न शोभन उपन्यासः, तदेवेत्यनेन भवनस्वभावस्याऽभिधानात्। तद् भवनं, क्षणभवनस्वभावमिति चेत्। एतदाशङ्क्याह-**कथं द्वितीयक्षणे न भवति** तस्यापि क्षणत्वादित्यभिप्रायः। एकक्षणस्थितिस्वभावमिति चेत्। एतदाशङ्क्याह- **न ह्यसावपि नैकः**। किन्तर्हि, एक एव। तदेकक्षणभवनस्वभावं तस्मिन्नेवैकस्मिन् क्षणे भवनं स्वभावो यस्य तत् तथा, इत्येवं, चेद् मन्यसे। एतदाशङ्क्याह- **नासौ**

क्षणः, तदतिरेकेण भवनातिरेकेण कश्चित्, तदक्षणिकत्वप्रसङ्गात्, तदैव तदपरक्षणाभावादनवस्थापत्तेरिति भावनीयम्। इति निबन्धनाभावतः कारणात्, यत्किञ्चिदेतद् यदुत तदेकक्षणभवनस्वभावमिति ॥

एवं च तदतिरिक्तोत्पत्त्यभावादविशिष्टभवनानन्तरमभवनमिति प्राप्तम्, तथा च सति क्षणिकत्वेऽप्यनिश्चयः, तत्कादाचित्कतया तु तदुत्पत्त्याद्यपरिहृतमेव। न नश्वरमभवनम्, तुच्छत्वादिति चेत्। भवनेऽप्यतुच्छतया समानमेतत्। न समानम्, तस्याऽभवनविरोधात्। अभवनस्य भवने को विरोधः?। नीरूपस्य सरूपतापत्तिरिति चेत्। सरूपस्य कथं नीरूपतापत्तिरिति वाच्यम्?। स्वहेतोस्तत्स्वभावादिति चेत्। अभवनस्यैवं स्वभावभवनेऽपि को दोषः?। हेत्वभावनिःस्वभावत्वे इति चेत्। न, तद्भवनस्यैव तद्धेतुत्वात्, तद्भावभावित्वात्, भावाभवनस्याभावभवनात्, तुच्छतया तद्भावसिद्धेः, अन्यथा तन्नाशायोगादिति ॥

एवं चेत्यादि। एवं चोक्तनीत्या, तदतिरिक्तोत्पत्त्यभावात्, भवनातिरिक्तोत्पत्त्यभावात्, अविशिष्टभवनानन्तरभवनमिति प्राप्तं न्यायतः। तथा च सति किमित्याह—क्षणिकत्वेऽप्यनिश्चयः अविशिष्टभवनमात्रसिद्धेः, तत् कादाचित्कतया तु-अभवनकादाचित्कतया तु, तदनन्तरभावेन तदुत्पत्त्यादि-अभवनोत्पत्तिनाशोत्तरोन्मज्जनाख्यम्, अपरिहृतमेव उक्तनीतितादवस्थ्यादिति। पराभिप्रायमाह—नेत्यादि। न नश्वरमभवनं भवनानन्तरमपि भवत्। कुत इत्याह— तुच्छत्वात् निःस्वभावत्वादिति चेत्। एतदाशङ्क्याह—भवनेऽप्यतुच्छतया सत्स्वभावत्वेन,समानमेतदनश्वरत्वम्।न समानम्,तस्य भवनस्य,अभवनविरोधात् कारणात्। एतदाशङ्क्याह—अभवनस्य भवने को विरोधः?। नीरूपस्य अभवनस्य, सरूपतापत्तिर्विरोध इति चेत्। एतदाशङ्क्याह— सरूपस्य भवनस्य, कथं नीरूपतापत्तिरित्येतद्वाच्यं समानमेतदित्यभिप्रायः। न समानमित्यावेदयति—स्वहेतोरित्यादिना। स्वहेतोः

सकाशात्, तत्स्वभावभावात् क्षणादूर्ध्वं नीरूपतास्वभावोत्पाद।दिति चेत्। एतदाशङ्क्याह- अभवनस्थैर्यं स्वभावभवने क्षणादूर्ध्वं स्वरूपतास्वभावोत्पादे, को दोषः? न कश्चिदित्यर्थः। हेत्वभावनिःस्वभावते दोष इति चेत्। एतदाशङ्क्याह-नेत्यादि। नैतदेवं यदुक्तं भवता। कुत इत्याह-तद्भवनस्यैव यद्भवनमेतत् तस्यैवेत्यर्थः। किमित्याह-तद्धेतुत्वात् अभवनहेतुत्वात्। कुत एतदेवमित्याशङ्क्याह-तद्भावभावित्वात् भवनभावभावित्वादभवनस्य। कस्तुच्छस्य भाव इत्याशङ्कापोहायाह-भावाभवनस्य तुच्छस्य, अभावभवनात्, एतदेव ह्यभावभवनं यद्भावाभवनमिति। एवं च तुच्छतया नीरूपतया, तद्भावसिद्धेरभवनभावासिद्धेः, अभवनं च भावश्चेति विरुद्धम्। भाव एव नाश इति तु कथं न विरुद्धम्? तत्क्षणस्थितिधर्मकत्वेन, अभवनमपि तत् कादाचित्कतयेत्यत एवाह-अन्यथा तन्नाशायोगादिति भवननाशायोगादिति॥

न च तन्निःस्वभावमेव, तुच्छज्ञेयस्वभावत्वात्, अन्यथा तज्ज्ञानानुपपत्तेस्तदेव न भवतीत्यज्ञातोक्तप्रसङ्गात्, तज्ज्ञानेनाभवनाज्ञानात्, कालभेदेन तदतत्त्वादिति। तस्यैव क्षणादूर्ध्वमभवनस्वभावत्वात् प्रत्यक्षेण तथाग्रहणाद् यथार्थे तत्प्रवृत्तेरभवनज्ञानादुक्तदोषाभाव इति चेत्। न, विहितोत्तरत्वात्, कालभेदेन तदतत्त्वात्, अन्यथा तदनुपपत्तेः, भाविनश्चेन्द्रियेणाग्रहणात्, अतिप्रसङ्गात्, नीरूपत्वाच्च। न चानेन क्वचिद्भवनवदभवनग्रहः, तथानिश्चयाभावात्। न च निरंशानुभवभावेऽपि विभ्रमात् तदभावः, भवननिश्चयस्याप्यभावापत्तेः। न च तन्निबन्धनानुभवे न विभ्रमः, तस्यैव तत्त्वात्। न चैकस्य क्वचिद् विभ्रमः, क्वचिद् नेति, एकत्वविरोधात्। न चान्तेऽभवननिश्चयात् तद्गतिः, तत्रापि तदयोगात्। न च कपालभवननिश्चय एव घटाभवननिश्चयः, तदभवनस्य निरुपाख्यत्वात्। न च तद्द्वारेण, तेन तस्य प्रतिबन्धासिद्धेः। न च तदभवनधर्मकमेव कपालभवनम्, अनभ्युपगमात्। इति तत्तुच्छत्वेऽपि नश्वरत्वादिसिद्धिः। उत्पा-

दादिमत्त्वे भवनाभवनयोरभेद इति चेत्। न, तुच्छेतरत्वाविशेषात्, निवृत्तिभेदात्, ग्रहणनानात्वात्; इति कुतोऽस्य क्षणस्थितिधर्मकत्वमेव? क्षणान्तरेऽपि स्थित्यापत्तेः। इत्यलं विस्तरेण। तदेवमिहापि विज्ञानादिकार्यायोग इति स्थितम्॥

अभ्युच्चयमाह-न चेत्यादिना। न च तन्निःस्वभावमेवाऽभवनम्। कुत इत्याह- तुच्छज्ञेयस्वभावत्वात्, अन्यथा तज्ज्ञानानुपपत्तेः अभवनज्ञानानुपपत्तेः। ततः किमित्याह- तदेव न भवतीत्यज्ञातोक्तिप्रसङ्गात् प्रसङ्गश्च तज्ज्ञानेन भवनज्ञानेन, अभवनाज्ञानात् अज्ञानं च कालभेदेन भवनाभवनयोस्तत्तत्त्वाद् भवनस्यैवाऽभवनत्वादिति। पराभिप्रायमाह- तस्यैवेत्यादि। तस्यैव भवनस्य वस्तुनः, क्षणादूर्ध्वमभवनस्वभावत्वात् कारणात्। यदि नामैवं ततः किमित्याह- प्रत्यक्षेण तथाग्रहणात्। क्षणादूर्ध्वमभवनस्वभावतया ग्रहणात्। किमेतदेवमित्याह- यथार्थं तत्प्रवृत्तेः प्रत्यक्षप्रवृत्तेः। किमित्याह- अभवनज्ञानात् कारणात्, उक्तदोषाभावः- तज्ज्ञानेनाभवनाज्ञानादित्यादिदोषाभाव इति चेत्। एतदाशङ्क्याह-नेत्यादि। न नैतदेवम्। कुत- इत्याह- विहितोत्तरत्वात्। तदेव स्मारयति- कालभेदेनेत्यादिना। कालभेदेन भवनाभवनयोस्तत्तत्त्वाद् भवनस्यैवाऽभवनत्वात्। अन्यथैवमनभ्युपगमे, तदनुपपत्तेः-अभवनानुपपत्तेः, तत्कालभाविभवनाभिन्नमभवनं च भवनमेवेति तदनुपपत्तिः। यदि नामैवं ततः किमित्याह- भाविनश्च अभवनस्य, इन्द्रियेणाऽग्रहणात्। ग्रहणे दोषमाह- अतिप्रसङ्गात् तद्वदन्यस्यापि ग्रहणेन। दोषान्तरमाह- नीरूपत्वाच्च अभवनस्य नीरूपत्वं नीरूपसत्त्वाद्युपलक्षणमिति। अभ्युच्चयमभिधातुमाह- न चेत्यादि। न चानेन प्रत्यक्षेण, क्वचिदेकत्र सर्वत्र वा क्वचिदपि, भवनवद् यथा भवने तथा अभवने ग्रहः। कुतो नेत्याह-तथानिश्चयाभावात् भवन इव निश्चयाभावात्। अभवने आशङ्कान्तरापोहायाह- न चेत्यादि। न च निरंशानुभवभावेऽपि सति, विभ्रमाद् हेतोः, तदभावोऽभवननिश्चयाभावः। कुत इत्याह-भवननिश्चयस्यापि तन्निब-

न्धनस्याऽभावापत्तेः कारणात् । आशङ्कान्तरापोहायाह- न चेत्यादि । न च तन्निबन्धनानुभवे भवननिश्चयनिबन्धनानुभवे, न विभ्रमः। कुत इत्याह-तस्यैव अभवननिश्चयनिबन्धनानुभवस्यैव, तत्त्वाद् भवननिश्चयनिबन्धनत्वाद्, न चैकस्य सतोऽनुभवस्य, कचिद् विभ्रमः, कचिन्नेत्येतत् । कुत इत्याह- एकत्रविरोधात् । निरंशमेवैकं न तस्य कचिदिति विभागः । न चेत्यादि । न चान्ते संतानविनाशे, अभवननिश्चयात् कारणात्, तद्गतिरभवनगतिः। कुत इत्याह- तत्रापीत्यादि। तत्राप्यन्ते तदयोगादभवननिश्चयायोगात् । न चेत्यादि। न च कपालभवननिश्चय एव कपालग्रहणं भस्माद्युपलक्षणम्, घटाभवननिश्चयः घटाभवनं काष्ठाभवनादिसूचकम्। कुतो नेत्याह- तदभवनस्य घटाद्यभवनस्य,निरुपाख्यत्वात् तुच्छत्वात्। न च तद्द्वारेण कपालभवनद्वारेण, घटाभवननिश्चय इति वर्तते । कुतो नेत्याह-तेनेत्यादि।तेन कपालभवनेन सह, तस्य घटाभवनस्य। किमित्याह- प्रतिबन्धासिद्धेः तादात्म्याद्यनभ्युपगमात्। न च तदभवनधर्मकमेव घटाभवनधर्मकमेव, कपालभवनम् । कुत इत्याह-अनभ्युपगमादिति एवम्, तत्तुच्छत्वेऽप्यभवनतुच्छत्वेऽपि सति, नश्वरत्वादिसिद्धिः-उत्पत्तिनाशोत्तरोन्मज्जनसिद्धिः। पराभिप्रायमाह- उत्पादादिमत्त्वे सति, भवनाभवनयोरभेदस्तुल्यधर्मतयेति चेत् । एतदाशङ्क्याह-नेत्यादि । न नैतदेवम् । कुत इति हेतूनाह- तुच्छेतरत्वाविशेषात् भवनाभवनयोः, तथाहि-तुच्छमभवनम्, अतुच्छं भवनमिति विशेषः । तथा निवृत्तिभेदात् भवनस्य ह्यभवनं निवृत्तिर्भवनं त्वभवनस्य, तथा ग्रहणनानात्वादेकमतुच्छतया गृह्यते अन्यत्तुच्छतया; इत्येवमुत्पादादिसाम्येऽपि भवनाभवनयो रूपरसादेरिव भेदः। सर्वोपसंहारमाह-इति एवमुक्तनीतेः, कुतोऽस्य वस्तुनः, क्षणस्थितिधर्मकत्वमेव । अभवने कारणमाह- क्षणान्तरेऽपि अस्थितिव्यतिरेकादिना स्थित्यापत्तेः, इत्यलं विस्तरेण । तदेवमिहापि क्षणस्थितिधर्मके वस्तुनि, विज्ञानादिकार्यायोग इति स्थितम् ॥

**नित्यानित्यं पुनः कथञ्चिदवस्थितत्वात्, अनेकस्वभावत्वात्,**

निबन्धनोपपत्तेर्जनयति विज्ञानादिकमित्यवगम्यते । नित्यानित्यत्वं च वस्तुनो द्रव्यपर्यायोभयरूपत्वात्, अनुवृत्तव्यावृत्ताकारसंवेदनग्राह्यत्वात् प्रत्यक्षसिद्धमेवेति, तथाहि– मृत्पिण्डशिवकस्थासकघटकपालादिष्वविशेषेण सर्वत्राऽनुवृत्तो मृदन्वयः संवेद्यते, प्रतिभेदं च पर्यायव्यावृत्तिः, तथा च न यथाप्रतिभासं मृत्पिण्डादिसंवेदनम्, तथाप्रतिभासमेव शिवकादिषु, आकारभेदानुभवात् । न च यथाप्रतिभासभेदं तद्विजातीयेषूदकदहनपवनादिषु, तथाप्रतिभासभेदमेव शिवकादिषु, मृदन्वयानुभवात् । न चास्य स्वसंवेद्यस्यापि संवेदनस्यापह्नवः कर्तुं युज्यते, प्रतीतिविरोधात् । न च निराकारमेव संवेदनम्, अर्थान्तरस्येव ततो विवक्षितार्थापरिच्छेदात्; न ह्यर्थाकारानुभवव्यतिरेकेणापरोऽर्थपरिच्छेद इति, अतिप्रसङ्गात्, सर्वस्य सर्वार्थपरिच्छेत्तृत्वापत्तेश्च ॥

स्वपक्षमधिकृत्याह–नित्यानित्यं पुनः वस्तु, कथञ्चिदवस्थितत्वात् तत्तथाभवनेन, तथा अनेकस्वभावत्वाद् निमित्तोपादानहेतुस्वभावभेदेन, निबन्धनोपपत्तेस्तत्तत्स्वभावभावेन, जनयति विज्ञानादिकं कार्यम्, आदिशब्दात् स्वोपादानकार्यग्रहः, इत्येवम्, अवगम्यते ज्ञायते। एवं ज्ञानोपाय उक्तः, अधुना नित्यानित्यत्वमाह– **नित्यानित्यत्वं च वस्तुनो द्रव्यपर्यायोभयरूपत्वात्** कारणात्, द्रव्यपर्यायोभयरूपत्वं च अनुवृत्तव्यावृत्ताकारसंवेदनग्राह्यत्वात् । किमित्याह– **प्रत्यक्षसिद्धमेवेति** । एतदेव भावयति–**तथाहीत्यादिना** तथाहीत्युपप्रदर्शने, मृत्पिण्डशिवकस्थासकघटकपालादिषु भेदेषु, अविशेषेण सामान्येन, सर्वत्राऽनुवृत्तो मृदन्वयः संवेद्यते तथानुभवात् । प्रतिभेदं च भेदं भेदं प्रति च, मृत्पिण्डादिपर्यायव्यावृत्तिः, संवेद्यत इति वर्तते । एतद्भावनायैवाह– **तथा चेत्यादि** । तथा च न यथाप्रतिभासं न यथाकारं, मृत्पिण्डादिसंवेदनम्, तथाप्रतिभासमेव शिवकादिषु, संवेदनमिति वर्तते । कुतो नेत्याह– **आकारभेदानुभवात्** कारणात्,

न च यथाप्रतिभासभेदं तद्विजातीयेषु मृत्पिण्डादिविजातीयेषु । केष्वि-त्याह- उदकदहनपवनादिषु भेदेषु,तथाप्रतिभासभेदमेव शिवकादिषु। कुत इत्याह- मृदन्वयानुभवात् कारणात् । न चास्य स्वसंवेद्यस्यापि संवेदनस्यापह्नवोऽपलापः, कर्तुं युज्यते, प्रतीतिविरोधात्। न चेत्यादि। न च निराकारमेवैकान्तेन,स्वसंवेदनम् । कुत इत्याह- अर्थान्तरस्यैव अविषयाभिमतस्य, ततः संवेदनात्। किमित्याह- विवक्षितार्था-परिच्छेदात् । एतद्भावनायाह- न हीत्यादि । न यस्मादर्थाकारा-नुभवव्यतिरेकेणाऽपरोऽन्योऽर्थपरिच्छेद इति, अतिप्रसङ्गात्, अति-प्रसङ्गश्च तदाकारताऽभावे तद्वदपरपरिच्छेदेन । दोषान्तरमाह-सर्वस्य संवेदनस्येति प्रक्रमः, सर्वार्थपरिच्छेत्तृत्वापत्तेश्च परिच्छेद्यवदपरिच्छे-द्याकारशून्यत्वाविशेषादिति हृदयम् ॥

प्रदीपवत्प्रतिनियतार्थप्रकाशकस्वभावत्वात् तस्यायमदोष-इति चेत् । न, तद्धर्मातिक्रमात्, तदवगुण्ठितपदार्थस्यापरेणाप्र-तीतेः, तथानुभवाभावात्, तस्यापि च ज्ञानत्वेनोक्तदोषानतिवृत्तेः। प्रकाशकं ग्राहकमेवेति चेत् । अतदाकारं कथं तद्ग्राहकमिति वाच्यम्?। किमत्रोच्यते ? तस्यार्थाकारतानुपपत्तेः, अर्थात् तस्य व्यतिरिक्तेतरविकल्पायोगेन तत्रासम्भवात्-व्यतिरिक्तत्वे, ना-सावर्थस्य, सङ्गानुपपत्तेः; अव्यतिरिक्तत्वे तु न संवेदने, अर्था-त्मकत्वात्, अर्थतुल्याकारताया अप्यमूर्त्तस्योपरञ्जकयोगाभावे-नाभावादिति। यत्किञ्चिदेतत्, अभिप्रायापरिज्ञानात्, संवेदना-र्थग्रहणपरिणामस्यार्थाकारताभ्युपगमात्, तथा चोक्तदोषानुप-पत्तेः, तस्यैव तथारूपत्वादिति । उक्तं च वादिमुख्येन-"न विषयग्रहणपरिणामादृतेऽपरः संवेदने विषयप्रतिभासो युज्यते, युक्त्ययोगात्" इति ॥

पराभिप्रायमाह- प्रदीपवदित्यादिना । प्रदीपवदिति दृष्टान्तः, प्रतिनियतार्थप्रकाशकस्वभावत्वात् कारणात्, तस्य संवेदनस्य, अय-मनन्तरोदितो दोषः, अदोष इति चेत् । एतदाशङ्क्याह- नेत्यादि

न नैतदेवम् । कुत इत्याह– **तद्धर्मातिक्रमात्** प्रकाशकधर्मातिक्रमात् संवेदनस्य, अतिक्रमश्च तदवगुण्ठितपदार्थस्य संवदने संवेदनप्रभोपचारात् संवेदनावगुण्ठितपदार्थस्य,अपरेण तदर्थान्तरभूतेन केनचित्,अप्रतीतेः कारणात्, अप्रतीतिश्च तथानुभवाभावात्, तस्यापि चापरस्य, ज्ञानत्वेन हेतुना, उक्तदोषानतिवृत्तेस्तद्धर्मातिक्रमानतिवृत्तेः, प्रदीपस्तु स्वभावगुण्ठितं तदपरेण संवेदनेन प्रत्याययतीत्येवं प्रकाशक इति तद्धर्मातिक्रमः । पराभिप्रायमाह– **प्रकाशकं ग्राहकमेवेति चेत्** निदर्शनमात्रं तु प्रदीपः । एतदाशङ्क्याह– **अतदाकारमिति** प्रक्रमादनर्थाकारमर्थाकारशून्यं,कथं तद्ग्राहकमर्थग्राहकम् ,इति वाच्यमेतत् । आह– **किमत्रोच्यते, तस्येति** प्रक्रमात् संवेदनस्य, अर्थाकारतानुपपत्तेः, अनुपपत्तिश्च अर्थात् सकाशात्, तस्याऽऽकारस्य,व्यतिरिक्तेतरविकल्पायोगेन हेतुना, तत्र संवेदने, असंभवात् कारणात् । एतदेव भावयति– **व्यतिरिक्तत्व इत्यादिना** । व्यतिरिक्तत्वेऽर्थाकारस्याभ्युपगम्यमाने, नासावर्थस्याऽऽकारः । कुत इत्याह– **सङ्गानुपपत्तेः** तस्येति संबन्धाभावात् । अव्यतिरिक्तत्वे तु न संवेदनेऽर्थाकारः । कुत इत्याह– **अर्थात्मकत्वात्** अर्थ एवाऽसाविति । अर्थतुल्याकारताऽर्थाकारतेत्यप्यसदित्यावेदयन्नाह– **अर्थेत्यादिना** । अर्थतुल्याकारताया अपि । किमित्याह– **अमूर्तस्य** संवेदनस्य, उपरञ्जकयोगाभावेन च्छायाण्वादिसंबन्धाभावेनेत्यर्थः, अभावात् कारणात्, अर्थाकारतानुपपत्तिरिति क्रिया । एतदाशङ्क्याह–**यत्किञ्चिदेतत्** अनन्तरोदितम् । कुत इत्याह– **अभिप्रायापरिज्ञानात्** । एतदेवाह–**संवेदनेत्यादिना** संवेदनस्याऽर्थग्रहणपरिणामस्तथानुभवसिद्धो बहिर्मुखावभासः संवेदनार्थग्रहणपरिणामस्तस्यार्थाकारताभ्युपगमात् । तथा च एवं च, उक्तदोषानुपपत्तेः,अनुपपत्तिश्च तस्यैव संवेदनस्य, तथारूपत्वात् अर्थग्रहणपरिणामरूपत्वात् । न चैतत्स्वमनीषिकयोच्यत इति ज्ञापकमाह– **उक्तं च वादिमुख्येन** श्रीमल्लवादिना सम्मतौ । किमित्याह– **न विषयग्रहणपरिणामादृतेऽपरोऽन्यः**, संवेदने विषयप्रतिभासस्तत्प्रतिबिम्बादिरूपः ।

एकान्तनित्यत्वानुपपत्तेः। तथा चोक्तमिति ज्ञापकमाह– भावेष्वे-कान्तनित्येषु अप्रच्युतानुत्पन्नस्थिरैकस्वभावेषु, नान्वयव्यतिरेकवत् संवेदनं भवेत्। कुत इत्याह–धर्मभेदाभावात् पर्यायभेदाभावात्, इह स्फुटमित्यादि। तथैकान्तनश्वरेष्वपि, भावेष्विति प्रक्रमः। नाधिकृतसंवे-दनभावो युज्यते अधिकृतमन्वयव्यतिरेकवत्। कुतो न युज्यत इत्याह– अनुवृत्ताकारनिबन्धनस्य द्रव्यान्वयस्याऽभावात्॥

न च निरन्वयनश्वरवादिनस्ततस्तत्सदृशान्यप्रभवः संभवति, सर्वथा हेतुनिवृत्तावहेतुकत्वप्रसङ्गात्, अन्यथाऽन्वयसिद्धेरिति।

उक्तं च–

"सर्वथा कारणोच्छेदाद् भवेत् कार्यमहेतुकम्।
तच्छक्त्यवयवाधारस्वभावानामनन्वयात्"॥१॥इत्यादि।

न चास्य संवेदनस्य बाधकः प्रत्ययोऽस्ति, कदाचिदप्य-नुपलब्धेः। न च योगिप्रत्ययो बाधक इति युज्यते वक्तुम्, प्रमाणाभावात्।

उक्तं च–

"नित्यं योगी विजानाति क्षणिकं नेति का प्रमा?।
देशनाया विनेयानुगुण्येनापि प्रवृत्तितः"॥१॥इत्यादि॥

तस्मादन्वयाविनाभूतो व्यतिरेकः, व्यतिरेकाविनाभूतश्चा-न्वय इति वस्तुस्वभावः।

तथा चोक्तम्–

"नान्वयस्तद् विभेदत्वाद् न भेदोऽन्वयवृत्तितः।
मृद्भेदद्वयसंसर्गवृत्ति जात्यन्तरं हि तत्" ॥१॥

तस्मात् तद् यत एव नित्यम्, अत एवानित्यं द्रव्यात्मना नित्यत्वात्, तस्य चाभ्यन्तरीकृतपर्यायत्वात्; यत एव चानित्यम्, अत एव नित्यं पर्यायात्मनाऽनित्यत्वात्, तस्य चाभ्यन्तरीकृत-द्रव्यत्वात्। उभयरूपस्य चानुभवसिद्धत्वात्, एकान्तभिन्नस्य चोभयस्याभावात्, तथानुपलब्धेः।

न्तरमेव तद्वस्त्वित्यादिपूर्वपक्षग्रन्थयोजनामाह-यस्मादेवम्, तस्मादित्यादि । तस्मात् तद् वस्तु, यत एव नित्यमनुवृत्ताकारप्रत्ययग्राह्यम्, अतएवानित्यं व्यावृत्ताकारप्रत्ययग्राह्यम् । उपपत्तिमाह— द्रव्यात्मना नित्यत्वात् कारणात्, तस्य च द्रव्यात्मनः, अभ्यन्तरीकृतपर्यायत्वात्, अन्यथा द्रवणानुपपत्तिरिति भावना । यत एव चानित्यमतएव नित्यमिति पूर्ववत् । उपपत्तिश्च पर्यायात्मनाऽनित्यत्वात् कारणात्, तस्य च पर्यायात्मनः, अभ्यन्तरीकृतद्रव्यत्वात्, अन्यथा पर्ययणायोग इति हृदयम् । उभयरूपस्य च द्रव्यपर्यायोभयापक्षया, अनुभवसिद्धत्वात् अनुवृत्तव्यावृत्ताकारसंवेदनभावेन । एकान्तभिन्नस्य चोभयस्य द्रव्यपर्यायलक्षणस्य । किमित्याह— अभावात् । अभावश्च तथानुपलब्धेस्तथेतीतरेतरविविक्ततयाऽदर्शनात् । उक्तं चेति ज्ञापकमाह— द्रव्यं पर्यायवियुतं एकान्तेन, तथा पर्याया द्रव्यवर्जिता एकान्तेनैव, क्व देशे, कदा काले, केन प्रमात्रा, किंरूपा इतरेतरवैकल्येन नीरूपतापत्तेरित्यर्थः, दृष्टा उपलब्धाः, मानेन केन वा प्रत्यक्षादिना ? इत्यादि ॥

स्यादेतत् पर्यायनिवृत्तौ द्रव्यनिवृत्तिर्भवति, किंवा न ? इति, किञ्चातः ? यदि भवति, अनित्यमेव तत्, निवृत्तिमत्त्वात्, पर्यायस्वात्मवत् । अथ न भवति, हन्त ! तर्हि द्रव्यपर्याययोर्भेदप्रसङ्गः, तथाहि—पर्यायेभ्योऽन्यद् द्रव्यम्, तन्निवृत्तावपि तस्यानिवृत्तेः, क्रमेलकादिव कर्क इति । एतदप्ययुक्तम्, कथञ्चिन्निवृत्तिभावात्, तत्तन्निवृत्तेः, संबन्धबीजभावात्; अनुभवसिद्धश्चायम्, तथाहि—द्रव्यपर्यायोभयरूपं वस्तु, इतरेतरविनिर्मुक्तस्योभयस्याग्रहणात्; युक्त्यनुपपत्तेश्च, अनुपपत्तिश्चोर्ध्वाद्याकाररहितस्य मृद्द्रव्यस्याऽसंभवात्, ऊर्ध्वाद्याकारस्यापि मृद्द्रव्यरहितस्य, न हि मुकुलितार्धमुकुलिताद्याकारशून्यं वियत्कुसुमद्रव्यमस्ति; न चाद्रव्यास्तन्मुकुलितादयः । इत्यन्योन्यानुविद्धोभयरूपवस्तुसिद्धिः ॥

स्यादेतत् अथैवं मन्यसे, पर्यायनिवृत्तौ सत्यां, द्रव्यनिवृत्तिर्भवति, किंवा नेति, किञ्चातः । यदि भवत्यनित्यमेव तद् द्रव्यम्, निवृ-

त्तिमत्त्वात् कारणात्, पर्यायस्वात्मवदिति दृष्टान्तः । अथ न भवति हन्त तर्हि द्रव्यपर्याययोर्भेदप्रसङ्गः । एतदेव भावयति- **तथाहीत्यादिना** । तथाहि- पर्यायेभ्यः सकाशात्, अन्यद् द्रव्यम्, तन्निवृत्तावपि पर्यायनिवृत्तावपि, तस्यानिवृत्तेर्द्रव्यस्य अनिवृत्तेः कारणात्, क्रमेलकादुष्ट्रादिव कर्कोऽश्व विशेष इति निदर्शनमिति । एतदाशङ्क्याह-**एतदप्ययुक्तम्**।कुत इत्याह-**कथञ्चित्** केनचित् प्रकारेण तन्निमित्तत्वलक्षणेन, निवृत्तिभावात् । कुत इत्याह- **तत्तन्निवृत्तेः** तस्य द्रव्यस्य पर्यायनिवृत्तेः। यदि नामैवं ततः किमित्याह-**संबन्धबीजभावात्** तस्य निवृत्त इति तत्र संबन्धबीजभावः । अनुभवसिद्धश्चायं कथञ्चिन्निवृत्तिभावः । एतदेव दर्शयति- **तथाहीत्यादिना** । तथाहीत्युपप्रदर्शने, द्रव्यपर्यायोभयरूपं वस्तु इतरेतरविनिर्मुक्तस्योभयस्याग्रहणादित्युक्तप्रायम् । तथा युक्त्यनुपपत्तेश्च, अनुपपत्तिश्चोर्ध्वाद्याकाररहितस्य मृद्द्रव्यस्याऽसंभवात्- न मूर्त्तमनाकारमित्यनुमानमेतत्, ऊर्ध्वाद्याकारस्यापि मृद्द्रव्यरहितस्य, असंभवादिति वर्तते । **न हीत्यादि** । निदर्शनम्, न हि मुकुलितार्धमुकुलिताद्याकारशून्यं वियत्कुसुमद्रव्यमस्ति सर्वाविसंवादात्। न चाद्रव्यास्तन्मुकुलितादयो वियत्कुसुममुकुलितादयः। इत्येवम्, अन्योन्यानुविद्धोभयरूपवस्तुसिद्धिः ॥

**अत एव घटपर्यायनिवृत्तौ कपालकालेऽपि तद्बुद्ध्या मृदनुभूयते, मृन्निवृत्तौ चोर्ध्वादिपर्यायवद् नानुभूयेत । मृदनिवृत्तावप्यूर्ध्वादिनिवृत्तित एव तद्भेदसिद्धिरिति चेत् । न, ऊर्ध्वादेः मृदः सर्वथा भेदासिद्धेः, तत्स्वरूपाननुविद्धस्यानुपलम्भात् । क्षीरोदकादिभिर्व्यभिचार इति चेत् । न, तेषां पूर्वं पश्चाच्च भेदेनापि सिद्धेः, भिन्नोपादानत्वेन च तन्निवृत्तावपि पृथग्मृदस्तद्विकारापत्तेश्च । कपालाद्याकार एव तद्विकार इति चेत् । न, तस्यापि मृदः सर्वथा भेदासिद्धेः । अत एव कथञ्चिदूर्ध्वादिनिवृत्तिः, तदात्मभूतकपालाद्याकारानिवृत्तेः, मृदोऽपि च निवृत्तिः,तथाविधोर्ध्वाद्यपृथग्भवनात्मस्वभावनिवृत्तेः, इति सर्व-**

वञ्च्यते वञ्चनम् ॥ १ ॥ प्रतार्यते प्रतारणम् ॥ २ ॥ विशिष्टमलीकमत्र व्यलीकम् ॥ ३ ॥ अति संधीयतेऽतिसंधानम् ॥ ४ ॥

साधौ सभ्यार्यसज्जनाः ॥ ४३ ॥

साधयति कार्याणीति साधुः "कृवापाजि-" ॥ ( उणा–१ ) ॥ इति उण्, तत्र ॥ १ ॥ सभायां साधुः सभ्यः ॥ २ ॥ अर्यतेऽभिगम्यते आर्यः ॥ ३ ॥ सत् शोभनं जनयति सज्जनः, संश्चासौ जनश्चेति वा सज्जनः ॥ ४ ॥ ४३ ॥

दोषैकदृक् पुरोभागी

दोषे एव एकस्मिन् दृग् ज्ञानं यस्य स दोषैकदृक् । यत्कात्यः–दोषैकग्राहिहृदयः पुरोभागीति कथ्यते ॥ १ ॥ पुरोऽग्रं सर्पवद् भजतीत्येवंशीलः पुरोभागी "युजभुजभज-" ॥ ५ । २ । ५० ॥ इति घिनण् ॥ २ ॥

कर्णेजपस्तु दुर्जनः ।

पिशुनः सूचको नीचो द्विजिह्वो मत्सरी खलः ॥ ४४ ॥

कर्णे जपति सूचयति कर्णेजपः "शोकापनुदतुन्दपरिमृज-"॥५।१।१४३॥ इति के निपात्यते ॥ १ ॥ दुष्टो जनो दुष्टं जनयति वा दुर्जनः ॥ २ ॥ पिंशति एकदेशेन सूचयति पिशुनः "पिशिमिथिक्षुधिभ्यः कित्" ॥ ( उणा--२९० ) ॥ इत्युनः, पिशुनयतीति वा, अपिशुनति वा पृषोदरादित्वात्, अपिश्यति खण्डयतीति भोजः ॥ ३ ॥ सूचयतीति सूचकः ॥ ४ ॥ निकृष्टमञ्चति नीचः "न्युद्भ्यामञ्चेः-" ॥ ( उणा-१००३ ) ॥ इति के टावद्भावे च "अच्च् प्राग्दीर्घश्च" ॥ २ । १ । १०४ ॥ इति साधुः ॥ ५ ॥ द्वे जिह्वे वचने अस्य द्विजिह्वः ॥ ६ ॥ मत्सरोऽस्त्यस्य मत्सरी ॥ ७ ॥ खनति साधुहृदयं खलः पुंक्लीबलिङ्गः, आश्रयलिङ्ग-इत्यन्ये "मृजिखन्याहनिभ्यो डित्" ॥ ( उणा-४७२ )॥ इत्यलः, खलति संचिनोति पापम्, खलति गुणेभ्य इति वा, खं शून्यं लातीति वा ॥ ८ ॥

शेषश्चात्र—अथ क्षुद्रप्रखलौ खले ॥ ४४ ॥

व्यसनार्तस्तूपरक्तः

व्यसति श्रेयोमार्गाद् व्यसनं तेन ऋतः व्यसनार्तः "ऋते तृतीयासमासे" ॥ १ । २ । ८ ॥ इत्यार् ॥ १ ॥ उपरज्यते स्म उपरक्तः ॥ २ ॥

चोरस्तु प्रतिरोधकः ।

दस्युः पाटच्चरः स्तेनस्तस्करः पारिपन्थिकः ॥ ४५ ॥

परिमोषिपरास्कन्द्यैकागारिकमलिम्लुचाः ।

चोरयति चोरः, प्रज्ञाद्यणि चौरोऽपि ॥ १ ॥ प्रतिरुणद्धि प्रतिरोधकः ॥ २ ।

दसति उपक्षयतीति दस्युः "यजिशुन्धिदहिदसि-" ॥ ( उणा-८०१ ) ॥ इति युः ॥ ३ ॥ पाटयंश्चरति पाटच्चरः, पृषोदरादित्वात्, पटच्चरे जीर्णवस्त्रे भवो वा पाटच्चरः, पटच्चोर इत्येके ॥ ४ ॥ स्तेनयति स्तेनः पुंक्लीबलिङ्गः ॥ ५ ॥ तत् करोतीति तस्करः, वर्चस्कादित्वात् साधुः ॥ ६ ॥ परिपन्थं तिष्ठति हन्ति वा पारिपन्थिकः "परिपन्थात् तिष्ठति च "॥६।४।३२॥ इति इकण् ॥७॥४५॥ परिमुष्णातीत्येवंशीलः परिमोषी ॥ ८ ॥ परानास्कन्दति परास्कन्दी ॥ ९ ॥ एकमसहायमगारं प्रयोजनमस्य ऐकागारिकः "एकागाराच्चौरे" ॥ ६।४।११८ ॥ इति इकण् ॥१०॥ मलिनं म्लोचति मलिम्लुचः ॥ ११ ॥

शेषश्चात्र—चौरे तु चोरडो रात्रिंचरः ॥

**यः पश्यतो हरेदर्थं स चौरः पश्यतोहरः ॥ ४६ ॥**

"पश्यद्वाग्दिशो हरयुक्तिदण्डे" ॥३।२।३२॥ इति षष्ठ्या अलुप् ॥१॥४६॥

**चौर्यं तु चौरिका स्तेयं**

चौरस्य भावः कर्म वा चौर्यम्, राजादित्वात् व्यण् ॥ १ ॥ चोरस्यापि चौरिका स्त्रीक्लीबलिङ्गः ॥ २ ॥ स्तेनस्य भावः स्तेयं "स्तेनाद् नलुक् च" ॥७।१।६४॥ इति यः, राजादित्वात् व्याणि स्तैन्यमपि ॥ ३ ॥

**लोप्त्रं त्वपहृतं धनम् ।**

लुप्यते लोप्त्रं चौर्यधनं "हुयामा-" ॥ (उणा--४५१) ॥ इति त्रः ॥ १ ॥

**यद्भविष्यो दैवपरः**

यद् भविष्यति तद् भवत्वित्येवमाचष्टे यद्भविष्यः ॥ १ ॥ दैवपरो दैववादी दैवप्रमाणकः ॥ २ ॥

**अथाऽऽलस्यः शीतकोऽलसः ॥ ४७ ॥**

**मन्दस्तुन्दपरिमृजोऽनुष्णः**

आलस्यमस्त्यस्य आलस्यः, अभ्रादित्वादः ॥१॥ शीतं मन्दं करोतीति शीतकः "शीताच्च कारिणि "॥७।१।१८६॥ इति कः ॥ २ ॥ न लसत्यलसः, अलतीति वा "तप्याणि-"॥ (उणा-५६९)॥ इत्यसः ॥३॥४७॥ मन्दते स्वपितीव मन्दः, अत एव मदि जाड्ये इति चान्द्रो धातुः, मन्यते वा " शाशपिमनि-" ॥ ( उणा--२३७ ) ॥ इति दः ॥ ४ ॥ तुन्दं परिमार्ष्टि तुन्दपरिमृजः "शोकापनुदतुन्दपरिमृज-" ॥ ५ ॥ १ ॥ १४३ ॥ इति कः ॥ ५ ॥ न उष्णः अनुष्णः ॥ ६ ॥

**दक्षस्तु पेशलः ।**

**दृष्णोष्णकसूत्थानचतुराश्च**

दक्षते शीघ्रं करोति दक्षः ॥ १ ॥ पिष्टत्यकदेशेन सर्वं करोति पेशलः "मृदिकन्दि-" ॥ ( उणा-४६५ ) इत्यलः ॥ २ ॥ पटति पटुः ॥ ३ ॥ ओषति दहतीति उष्णः "घृवीह्वा-" ॥ ( उणा-१८३ ) ॥ इति णक् ॥ ४ ॥ उष्णं क्षिप्रं करोति इत्युष्णकः "शीताच्च कारिणि" ॥७।१।१८६॥ इति कः ॥ ५ ॥ सुष्ठु उत्थानमुद्योगोऽस्य सूत्थानः ॥ ६ ॥ चतते कर्म चतुरः ॥ ७ ॥

अथ तत्परः ॥ ४८ ॥

आसक्तः प्रवणः प्रह्वः प्रसितश्च परायणः ।

तत्परमस्य तत्परस्तन्निष्ठः ॥१॥४८॥ आसजति स्म आसक्तः ॥ २ ॥ प्रकर्षेण वनति संभजते प्रवणः ॥ ३ ॥ प्रह्वयते कार्ये स्पर्धते प्रह्वः "उपसर्गादातो डोऽश्यः" ॥ ५।१।५६ ॥ इति डः ॥ ४ ॥ प्रसिनोति स्म प्रसितः ॥ ५ ॥ परं कार्यं पारमयते परायणः ॥ ६ ॥

दातोदारः

ददाति दाता ॥ १ ॥ उदर्यते उदारः ॥ २ ॥

स्थूललक्षदानशौण्डौ बहुप्रदे ॥ ४९ ॥

स्थूलं लक्षयति आलोचयति ददाति इति यावत् स्थूललक्षः ॥ १ ॥ दाने प्रसक्तः शौण्ड इव दानशौण्डः ॥ २ ॥ बहु प्रदत्ते बहुप्रदः, तत्र ॥ ३ ॥ ४९ ॥

दानमुत्सर्जनं त्यागः प्रदेशनविसर्जने ।

विहायितं वितरणं स्पर्शनं प्रतिपादनम् ॥ ५० ॥

विश्राणनं निर्वपणमपवर्जनमंहतिः ।

दीयते दानम् ॥ १ ॥ उत्सृज्यते उत्सर्जनम् ॥ ॥ २ ॥ त्यजनं त्यागः ॥ ३ ॥ प्रदिश्यते प्रदेशनम्, प्रादेशनमपि ॥ ४ ॥ विसृज्यते विसर्जनम् ॥ ५ ॥ हिनोतेर्ण्यन्तस्य क्ते विहायितम् ॥ ६ ॥ वितीर्यते वितरणम् ॥ ७ ॥ स्पृश्यते स्पर्शनं दानमुपचारात्, पुच्छादौ गवादिकं स्पृष्ट्वा हि दीयते ॥ ८ ॥ प्रतिपाद्यते प्रतिपादनम् ॥९॥५०॥ विश्राण्यते विश्राणनम् ॥१०॥ निरुप्यते निर्वपणम्, निर्वापणमपि ॥ ११ ॥ अपवृज्यतेऽपवर्जनम् ॥१२॥ हन्यते दौर्गत्यमनया अंहतिः, स्त्रीलिङ्गः "हन्तेरंह च" ॥ ( उणा-६५४ ) ॥ इत्यतिः; स्वतः, उपसर्गवशाच्चैते दानार्थाः ॥ १३ ॥

अर्थव्ययज्ञः सुकलः

अर्थव्ययं जानाति अर्थव्ययज्ञो दाता भोक्ता च, शोभना कलाऽस्य सुकलः ॥ १ ॥

याचकस्तु वनीपकः ॥ ५१ ॥
मार्गणोऽर्थी याचनकस्तर्कुकः

याचते याचकः ॥ १ ॥ वनुते याचते वनीपकः "कीचकपेचक-" ॥ (उणा-३३) ॥ इत्यादिशब्दादकान्तो निपात्यते ॥२॥५१॥ मार्गति मार्गणः ॥ ३ ॥ अर्थनशीलोऽर्थी, अर्थोऽस्यास्तीति वा "अर्थार्थान्ताद्भावात्" ॥७।२।८॥ इतीन् ॥ ४ ॥ याचते याचनः स्वार्थे के याचनकः ॥ ५ ॥ चतते तर्कुकः "कञ्चुकांशुक-" ॥(उणा–५७) ॥ इत्युकान्तो निपात्यते ॥ ६ ॥

अथार्थनैषणा ।
अर्दना प्रणयो याच्ञा याचनाध्येषणा सनिः ॥ ५२ ॥

अर्थनमर्थना ॥ १ ॥ एषणमेषणा "इषोऽनिच्छायाम्" ॥ ५।३।११२ ॥ इत्यनः ॥ २ ॥ अर्दनमर्दना ॥ ३ ॥ प्रणयनं प्रणयः ॥ ४ ॥ याचनं याच्ञा "मृगयेच्छायाच्ञा-" ॥५।३।१०१॥ इति साधुः ॥ ५ ॥ याचेः स्वार्थेण्यन्तस्याऽने याचना ॥ ६ ॥ अध्येषणमध्येषणा "पर्यधेर्वा" ॥ ५।३।११३ ॥ इत्यनः ॥ ७ ॥ सन्यते सनिः "पदिपठि-" ॥ (उणा-६०७) ॥ इति इः, स्त्रीलिङ्गोऽयं, पुंस्यपि वैजयन्ती, यदाह—'भिक्षा च सनिरक्ली स्यात्' इति । 'सनिस्त्वध्येषणा' इति गुर्वादेः क्वचिदर्थे प्रार्थनया नियोजनमित्यमरः पृथगाह ॥ ८ ॥ ५२ ॥

शेषश्चात्र–

याच्ञा तु भिक्षणा । अभिषस्तिर्मार्गणा च ॥

उत्पतिष्णुस्तूत्पतिता

उत्पतति ऊर्ध्वं गच्छतीत्येवंशील उत्पतिष्णुः "उदः पचिपतिपदिमदेः" ॥ ५।२।२९ ॥ इतीष्णुः ॥ १ ॥ २ ॥

अलङ्करिष्णुस्तु मण्डनः ।

अलंकरोतीत्येवंशीलोऽलङ्करिष्णुः "भ्राज्यलङ्कृग्-" ॥५।२।२८॥ इतीष्णुः ॥१॥ मण्डयति तच्छीलो मण्डनः "भूषाक्रोधार्थ-" ॥५।२।४२॥ इत्यनः ॥ २ ॥

भविष्णुर्भविता भूष्णुः

भवतीत्येवंशीलो भविष्णुः, इष्णुः ॥ १ ॥ भवतीति भविता ॥ २ ॥ भवतीत्येवंशीलो भूष्णुः "भूजेः ष्णुक्" ॥५।२।३०॥ इति ष्णुक् ॥ ३ ॥

समौ वर्तिष्णुवर्तनौ ॥ ५३ ॥

इष्णुः ॥ १ ॥ "इङितः-" ॥ ५।२।४४ ॥ इत्यनश्च ॥ २ ॥ ५३ ॥

विसृत्वरो विसृमरः प्रसारी च विसारिणि ।

विसरतीत्येवंशीलो विसृत्वरः " सृजिण्-" ॥ ५।२।७७ ॥ इति कित् ट्वरप् ॥१॥ विस्मरः " सृघस्यदः-"॥५।२।७३॥ इति मरक् ॥ २ ॥ प्रसारी " विपरि-प्रात् सर्तेः " ॥ ५।२।५५ ॥ इति घिनण् तत्र ॥ ३ ॥ ४ ॥

लज्जाशीलोऽपत्रपिष्णुः

लज्जाशीलमस्य लज्जाशीलः लज्जालुः ॥ १ ॥ अपत्रपते अपत्रपिष्णुः, इष्णुः ॥ २ ॥

सहिष्णुः क्षमिता क्षमी ॥ ५४ ॥

तितिक्षुः सहनः क्षन्ता

सहेः शीलाद्यर्थे इष्णौ सहिष्णुः ॥ १ ॥ क्षमेस्तृनीटि च क्षमिता ॥ २ ॥ " शमष्टकाद् " ॥५।२।४९॥ इति घिनणि क्षमी ॥ ३ ॥ ५४ ॥ तिजेः "गुप्तिज-" ॥३।४।५॥ इति सनि " सन्भिक्षा-" ॥ ५।२।३३ ॥ इत्युप्रत्यये च तितिक्षुः ॥४॥ सहेरने सहनः ॥ ५ ॥ क्षमेरौदित्त्वाद् वेट्त्वे क्षन्ता ॥ ६ ॥

तितिक्षा सहनं क्षमा ।

तितिक्षणं तितिक्षा ॥ १ ॥ सह्यते सहनम् ॥ २ ॥ क्षमणं क्षमा " षितो-ऽङ् " ॥ ५।३।१०७ ॥ इत्यङ्, क्षान्तिरित्यपि ॥ ३ ॥

ईर्ष्यालुः कुहनः

ईर्ष्यति ईर्ष्यालुः "लस्जीर्ष्यिशलेरालुः" ॥ (उणा–८२२) ॥ इत्यालुः ॥ १ ॥ कुहयते विस्मापयते कुहनः ॥ २ ॥

अक्षान्तिरीर्ष्या

ईर्ष्यणमीर्ष्या भार्यादेः परदर्शनासहने रूढा । कश्चित्तु परोत्कर्षासहनं मात्स-र्यमीर्ष्या मन्यते यथा–" य ईर्ष्युः परवित्तेषु " इति ॥ १ ॥ २ ॥

क्रोधी तु रोषणः ॥ ५५ ॥

अमर्षणः क्रोधनश्च

क्रुध्यति क्रोधी ॥ १ ॥ रुष्यतीत्येवंशीलो रोषणः ॥ २ ॥ ५५ ॥ न मृष्यति अमर्षणः ॥ ३ ॥ क्रुध्यति क्रोधनः " भूषाक्रोधार्थ-" ॥ ५।२।४२ ॥ इत्यनः, कोपनोऽपि ॥ ४ ॥

चण्डस्त्वत्यन्तकोपनः ।

चडुङ् कोपे चण्डते चण्डः, चणति शब्दायते वा " पञ्चमाड्डः ॥ ( उणा–१६८ ) ॥ इति डः ॥ १ ॥

बुभुक्षितः स्यात् क्षुधितो जिघत्सुरशनायितः ॥ ५६ ॥

बुभुक्षा संजाताऽस्य बुभुक्षितः, तारकादित्वादितः ॥ १ ॥ क्षुध्यति क्षुधितः, क्षुत् संजाताऽस्य वा ॥ २ ॥ अत्तुमिच्छुः जिघत्सुः ॥ ३ ॥ अशनमिच्छति आत्मन- इति "अमाव्ययात्-" ॥३।४।२३॥ इति क्यनि "क्षुत्तृड्गर्ध-"॥४।३।११३॥ इत्यात्वम्, ततः क्तेऽशनायितः ॥ ४ ॥ ॥ ५६ ॥

बुभुक्षायामशनाया जिघत्सा रोचको रुचिः ।

भोक्तुमिच्छा बुभुक्षा, तस्याम् ॥ १ ॥ अशनेच्छा अशनाया ॥ २ ॥ अत्तुमिच्छा जिघत्सा "घस्लृ सनद्यतनी-" ॥ ४।४।१७ ॥ इति सन्यदेर्घसादेशः ॥३॥ रोचनम्, रोचतेऽस्मिन्निति वा रोचकः पुंक्लीबलिङ्गः "नाम्नि पुंसि च"॥५।३।१२१॥ इति णकः ॥ ४ ॥ एवं रुचिः, स्त्रीलिङ्गः "नाम्युपान्त्य-" ॥ (उणा-६०९) ॥ इति किः ॥ ५ ॥

शेषश्चात्र-बुभुक्षायां क्षुधाक्षुधौ ॥

पिपासुस्तृषितस्तृष्णक्

पातुमिच्छुः पिपासुः, पिपासितोऽपि ॥ १ ॥ तृष्यति तृष्यितः ञ्यनुबन्धत्वात् सति क्तः, तृट् संजाताऽस्य वा तर्षितोऽपि ॥ २ ॥ तृष्यतीत्येवंशीलः तृष्णक् "तृषि-धृषि-" ॥ ५।२।८० ॥ इति नजिङ् ॥ ३ ॥

तृष्णा तर्षोऽपलासिका ॥ ५७ ॥

पिपासा तृट् तृषोदन्या धीतिः पाने

तर्षणं तृष्णा "मृगयेच्छा-" ॥ ५ । ३ । १०१ ॥ इति नङ् ॥१॥ घञि तर्षः ॥ २ ॥ अपकृष्टं लसत्यनया अपलासिका "नाम्नि पुंसि च"॥५।३।१२१॥ इति णकः ॥ ३ ॥ ५७ ॥ पातुमिच्छा पिपासा ॥ ४ ॥ तर्षणं तृट्, तृषा ॥५॥६॥ उदकेच्छा उदन्या क्यनि "क्षुत्तृड्गर्ध-" ॥४।३।११३ ॥ इत्युदकस्योदन् ॥ ७ ॥ ट्धें पाने धयनं धीतिः ॥ ८ ॥ पीयते पानं, तत्र ॥ ९ ॥

अथ शोषणम् ।

रसादानं

शुष्यते शोषणम् ॥ १ ॥ रसानामादानं रसादानम् ॥ २ ॥

भक्षकस्तु घस्मरोऽद्मर आशितः ॥ ५८ ॥

भक्षयति भक्षकः ॥ १ ॥ घसतीत्येवंशीलो घस्मरः, अत्ति अद्मरः "सृघस्यदो-" ॥५।२।७३ ॥ इति मरक् ॥ २ ॥ ३ ॥ आ समन्तात् अश्नाति आशितः, आशिरोऽपि ॥ ४ ॥ ५८ ॥

भक्तमन्नं कूरमन्धो भिस्सा दीदिविरोदनः ।

अशनं जीवनकं च याजो वाजः प्रसादनम् ॥ ५९ ॥

भज्यते भक्तम् ॥१॥ अनित्यनेन अन्नं "प्याधापन्यनि-"॥ (उणा–२५८) ॥ इति नः, अद्यते वा ॥ २ ॥ कौत्यनेन कूरं पुंक्लीबलिङ्गः, "खुरक्षुर-" ॥ (उणा–३९६) ॥ इति रान्तो निपात्यते ॥ ३ ॥ अद्यते अन्धः "अदेरन्ध् च वा" ॥ (उणा–९६३) ॥ इत्यस् ॥ ४ ॥ अभिप्सायते भक्ष्यते भिस्सा, पृषोदरादित्वात् साधुः ॥ ५ ॥ दीव्यन्त्यनेन दीदिविः पुंलिङ्गः, स्त्रियामपि वैजयन्ती, यदाह— "भिस्सा स्त्री दीदिविर्ने षण्" न षण्ढ इत्यर्थः, "छविच्छिवि-" ॥ (उणा–७०६)॥ इति व्यन्तो निपात्यते ॥ ६ ॥ उनत्ति क्लिद्यत्योदनः "उन्देर्नलुक् च" ॥ (उणा–२७१) ॥ इत्यनः ॥ ७ ॥ अश्यते एतादित्यशनं पुंक्लीबलिङ्गौ, भुज्यादित्वादनट् ॥ ८ ॥ जीव्यतेऽनेन अनटि स्वार्थे के जीवनकम् ॥ ९ ॥ इज्यतेऽनेन याजः, घञि "यजेर्यज्ञाङ्गे" ॥४।१।११४॥ इति गत्वाभावः ॥ १० ॥ वज्यते वाजः ॥ ११ ॥ प्रसाद्यतेऽनेनात्मा प्रसादनम् ॥ १२ ॥ ५९ ॥

भिस्सटा दग्धिका

कुत्सिता भिस्सा भिस्सटा लक्षानुरोधाट्टः, यथा--ओदनभिस्सटा, स्वर्गटी, ग्रामटी, वधूटीत्यादि ॥ १ ॥ कुत्सिता दग्धा दग्धिका ॥ २ ॥

सर्वरसाग्रं मण्डं

सर्वरसानां द्रवद्रव्याणामग्रं मुख्यं मण्डयति मण्डं पुंक्लीबलिङ्गः ॥ १ ॥

अत्र तु ।

दधिजे मस्तु

अत्र तु मण्डे, दधिसंभवे मस्यति परिणमते मस्तु क्लीबलिङ्गः "कृसिकम्यमि-" ॥ (उणा--७७३) ॥ इति तुन् ॥ १ ॥

भक्तोत्थे निःस्रावाचाममासराः ॥ ६० ॥

मण्डे भक्तसमुद्भवे निःस्राव्यते निःस्रावः ॥ १ ॥ आचाम्यते आचामः ॥ २ ॥ मीयते मासरः "मीज्यजिमा-" ॥ (उणा–४३९) ॥ इति सरः ॥ ३ ॥

शेषश्चात्र—

भक्तमण्डे तु प्रस्रावप्रस्रवाच्छोटनास्रवाः ॥ ६० ॥

श्राणा विलेपी तरला यवागूरुष्णिकाऽपि च ।

श्रायते स्म श्राणा "व्यञ्जनान्तस्थातः-" ॥ ४ । २ । ७१ ॥ इति क्तस्य नत्वम् ॥ १ ॥ विलिम्पति विलेपी, विलेप्याऽपि ॥ २ ॥ तरला लेह्यत्वाच्चपला, स्त्रीक्लीबलिङ्गः॥३॥ यूयते पिप्पल्यादिना यवागूः स्त्रीलिङ्गः "योरागूः"॥ (उणा–८५०)

इति आगूः ॥४॥ उष्णादग्नेरचिरोद्धृता उष्णिका "उष्णात्" ॥ ७।१।१८५॥ इति संज्ञायां कः ॥ ५ ॥

सूपः स्यात्प्रहितं सूदः

सुन्वन्त्येनं सूपः "युसुकुरुतुच्युस्त्वादेरूच्च" ॥ ( उणा-२९७ ) ॥ इति पः पुंस्ययम्, क्लीबेऽपि वैजयन्ती, यदाह-'सूपोऽस्त्री प्रहितं सूदः' इति ॥१॥ प्रकर्षेण हितं प्रहितम् ॥ २ ॥ सूद्यते सूदः ॥ ३ ॥

व्यञ्जनं तु घृतादिकम् ॥ ६१ ॥

व्यज्यन्ते रसविशेषा अत्र व्यञ्जनम् ॥ १ ॥ ६१ ॥

तुल्यौ तिलान्ने कृसरत्रिसरौ

तिलैर्मिश्रमन्नं तिलान्नं तत्र क्रियते पर्वणीति कृसरः "कृधूतन्यृषिभ्यः कित्" ॥ (उणा-४४०)॥ इति सरः ॥ १ ॥ त्रीन् सरति त्रिसरः, पुंस्त्रीलिङ्गौ, क्लीबेऽपि वैजयन्ती, यदाह—'तिलतन्दुलमाषैस्तु कृसरा त्रिसरा त्रयी' इति ॥ २ ॥

अथ पिष्टकः ।

पूपोऽपूपः

पिष्टस्य विकारः पिष्टकः "नाम्नि कः" ॥६।२।५४॥ इति कः पुंक्लीबलिङ्गः, पिष्ट एव वा स्वार्थे कः ॥ १ ॥ पूयते पूपः "क्षुकुंपिपूभ्यः कित्-" ॥ ( उणा— ३०१ ) ॥ इति पः ॥ २ ॥ अश्नुते अपूपः "अश ऊपः पश्च" ॥ (उणा–३१२) ॥ इत्यूपः, 'अद्भिरुप्यते' इति नैरुक्ताः ॥ ३ ॥

शेषश्चात्र—अपूपे पारिशोलः ॥

पूलिका तु पोलिकापोलिपूपिकाः ॥ ६२ ॥

पूपली

पूलति संहता भवति पूलिका ॥ १ ॥ पोलति वर्धते पोलिका ॥ २ ॥ पोल्यते वर्ध्यते पोलिः "स्वरेभ्य इः" ॥ ( उणा—६०६ ) ॥ इति इः, ङ्यां तु पोली ॥ ३ ॥ ह्रस्वः पूपः पूपिका ॥४॥६२॥ पूयते पूपली "मुरलोरल-" ॥ ( उणा— ४७४ ) ॥ इत्यले निपात्यते ॥ ५ ॥

अथेषत्पक्वे स्युरभ्यूषाभ्योषपौलयः ।

ईषत्पक्वं ईषद्भृष्टम्, तत्र, अभ्यूषति भजत्यभ्यूषः ॥ १ ॥ अभ्यूष्यते पच्यते अभ्योषः ॥ २ ॥ पोलति वर्धते पोलिः, पृषोदरादित्वात् ॥ ३ ॥

निष्ठानं तु तेमनं स्यात्

